ध्यनुच्छेददर्शनात्। न हि कामात्मता न प्रशस्तेत्येवं विज्ञानवद्भिः काम्यानि कर्म्माणि नानुष्ठीयन्त इति काम्यकर्मविषय उच्छिद्यन्तेऽनुष्ठीयन्त एव कामिभिरिति। तथा ब्रह्मसंस्थैर्ब्रह्मविद्भिर्नानुष्ठीयन्ते कर्म्माणीति न तद्विषय उच्छिद्यन्तेऽब्रह्मविद्भिरनुष्ठीयन्त एवेति। परिव्राजकानां भिक्षाचरणादिवदुत्पन्नैकात्मप्रत्ययानामपि गृहस्थादीनामग्निहोत्रादिकर्म्मानिवृत्तिरिति चेन्न। प्रामाण्यचिन्तायां पुरुषप्रवृत्तेरदृष्टान्तत्वात्। न हि नाभिचरेदिति प्रतिषिद्धमप्यभिचरणं कश्चित्कुर्वन्दृष्ट इति शत्रौ द्वेषरहितेनापि विवेकेनाभिचरणं क्रियते। न च कर्मविधिप्रवृत्ति

---

निमग्नः किं करिष्यतीति स्मृतेः॥ ततो ब्रह्मविदां नैष्कर्म्येऽपि न कर्मविधीनामप्रामाण्यप्रसिद्धिरित्युत्तरमाह॥ न काम्येति तदेव प्रपञ्चयति। न हीति॥ इति नोच्छिद्यन्त इति शेषः॥

अस्तु प्रकृते किमायातं तदाह। तथेति॥ अनुष्ठीयन्त एवेति। तर्हि तेषा-मनुच्छित्तिरिति वाक्यशेषः॥ अद्वैतवादिनोऽवश्यम्भाविनी कर्मनिवृत्तिरित्युक्तं दृष्टान्तेन विघटयन्नाशङ्कते। परिव्राजकानामिति॥ अद्वैतधी-स्वभावालोचनायां भिक्षाटनादिप्रवृत्तिरप्यघटमानैवेति मन्वानः समाधत्ते। न प्रामाण्येति॥ समुच्चयस्य प्रामाणिकत्वनिरूपणायां प्रत्ययाभासमूलस्य प्रवृत्त्याभासस्य नोदाहरणत्वं। अग्निहोत्रादिप्रवृत्तेरप्याभासत्वे प्रामाणिकसमुच्चयसिद्धान्तहानिरतो नैतच्चोद्यमित्यर्थः॥ एतदेव दृष्टान्तेन स्पष्टयति। न हीति॥ तद्वदविवेकीनां कर्म क्रियमाणं दृष्टमिति विवेकिभिरपि तन्न क्रियते। भिक्षाटनादिप्रवृत्त्याभासस्य प्रामाणिकेऽग्निहोत्रादिप्रवृत्तेर्नोदाहरणमिति शेषः। इतश्च नेदमुदाहरणमित्याह। न चेति॥ अग्निहोत्रादावपि प्रवर्त्तकमस्तीति शङ्कते। इच्छामीति॥

निमित्ते भेदप्रत्यये बाधितोऽग्निहोत्रादौ प्रवर्त्तकं निमित्तमस्ति । परिव्राजकस्येव भिक्षाचरणादौ बुभुक्षादि प्रवर्त्तकम्। इष्टाऽप्यकरणे प्रत्यवायभयं प्रवर्त्तकमिति चेत्। न भेदप्रत्ययवतोऽधिकृतत्वात् । भेदप्रत्ययवाननुपमर्दितभेदबुद्धिर्विद्यया यः स कर्मण्यधिकृत इत्यवोचाम। यो ह्यधिकृतः कर्मणि तस्य तदकरणे प्रत्यवायो न निवृत्ताधिकारस्य गृहस्थस्येव ब्रह्मचारिणो विशेषधर्म्मानुष्ठाने। एवं तर्हि सर्वः स्वाश्रमस्थ उत्पन्नैकप्रत्ययः परिव्राडिति चेत् । न । स्वस्वामित्वभेदबुद्ध्यनिवृत्तेः । कर्म्मार्थत्वाच्चेतराश्रमाणाम् । अथ कर्म कुर्वीयेति श्रुतेः । तस्माच्च स्वस्वामित्वाभावाद्भिक्षुरेक एव परिव्राट् न

---

अकरणकृतं प्रत्यवायाख्यं भयमविवेकिनो विवेकिनो वेति विकल्प्याद्यमङ्गीकरोति । न भेदेति ॥ कर्मणि भेदबुद्धिमतोऽधिकृतत्वेऽपि तस्य तदकरणे किं स्यादित्याशङ्क्याह । यो हीति ॥ द्वितीयं दूषयति । न निवृत्तेति ॥ विवेकिनो निवृत्ताधिकारस्य प्रत्यवायाप्राप्त्या कर्मसु प्रवर्त्तकाभावात्कर्मभ्यो निवृत्तिरूपं पारिव्राज्यञ्चेदतिप्रसङ्गस्तर्हीति शङ्कते । एवं तर्हीति॥ कर्मसाधनं यज्ञोपवीतादि त्यज्यते न वा । त्यज्यते चेन्न स्वाश्रमधर्मः । ततो यज्ञोपवीताद्यन्तरेण गार्हस्थ्यादिभावासम्भवात् । न त्यज्यते चेन्न पारिव्राज्यप्राप्तिः ॥ साधनसंग्रहस्य साध्यार्थत्वादिति परिहरति । स्वस्वामित्वेति॥ इतराश्रमान्तरेषु न पारिव्राज्यमित्याह । कर्म्मार्थत्वादिति ॥ जायापुत्रवित्तसम्बन्धानन्तर्यं श्रुतावथशब्दार्थः ॥ गृहस्थादिषु स्वाश्रमस्थेष्वेव पारिव्राज्यस्य दुर्वचत्वे फलितमाह । तस्मादिति ॥ विवेकवशाद्यज्ञोपवीतादौ स्वशब्दार्थे स्वामित्वबुद्ध्यभावादिति यावत् ॥ यत्तु परिव्राजकस्य निवृत्ताधिकारस्य प्रत्यवायानभिप्राप्तिरिति तत्रानिष्टापत्तिमाशङ्कते । एकत्वेति ॥ तद्विषयप्रत्ययस्य विधेरुत्पादकं तत्त्वमस्यादिवाक्यम् । तज्जनितेनैकत्वविषयेण प्रत्ययेनेति यावत् । तथाच यथेष्टचेष्टाप्रसक्ति-

ष्टहस्त्यादिः। एकत्वप्रत्ययविधिजनितेन प्रत्ययेन विधिनिमित्तभेदप्रत्ययस्योपमर्दितत्वाद्यमनियमाद्यनुपपत्तिः परिव्राजकस्येति चेत्। न। बुभुक्षादिनैकत्वप्रत्ययात्। प्रच्यावितस्योपपत्तेर्निवृत्त्यर्थत्वात्। न च प्रतिषिद्धसेवाप्राप्तिः। एकत्वप्रत्ययोत्पत्तेः प्रागेव प्रतिषिद्धत्वात्। न हि रात्रौ कूपे कण्टके वा पतिते उदितेऽपि सवितरि पतति तस्मिन्नेव। तस्मात्सिद्धं निवृत्तकर्म्मा भिक्षुक एव ब्रह्मसंस्थ इति। यत्पुनरुक्तं सर्वेषां ज्ञानवर्जितानां पुण्यलोकतेति। सत्यमेतत्। यच्चोक्तं तपःशब्देन परिव्राडप्युक्त इत्येतत्। तदसत्॥

कस्मात्परिव्राजकस्यैव ब्रह्मसंस्थता सम्भवात्। स एव चावशेषित इत्यवोचाम। एकत्वविज्ञानवतोऽग्निहोत्रादिवत्तपो

---

रिति शेषः। ज्ञानिनो वैधं यमादि नास्ति तत्प्रवृत्तिस्तु संस्कारवशादित्याशयेनाह। बुभुक्षादिनेति॥ यो हि दृष्टेन दोषेण तत्त्वज्ञानात्प्रच्यावितः प्रच्युतिकालादितस्तस्य संस्कारवशाद्यमनियमानुष्ठानमुपपद्यते। तस्य दोषकृततत्त्वप्रच्युतिप्रसूतानियतचेष्टानिवृत्त्यर्थत्वेनावश्यानुष्ठेयत्वात्। तथाच न यथेष्टचेष्टापत्तिरित्यर्थः। इतश्च विदुषो वैधप्रवृत्त्यभावेऽपि यथेष्टचेष्टा नास्तीत्याह न चेति॥ अविदुषोऽपि न यथेष्टचेष्टा विदुषस्तु सा कुतस्त्येति दृष्टान्तेन स्फुटयति। न हीति॥ अन्येषां ब्रह्मसंस्थत्वासम्भवे फलितमुपसंहरति। तस्मादिति॥ परोक्तमनूद्याङ्गीकरोति। यत्पुनरिति॥ उक्तमर्थान्तरमनुवदति। यच्चेति॥ किं परिव्राजकस्य ज्ञानहीनस्याश्रममात्रनिष्ठस्य तपःशब्देनोपादानमाहोस्विज्ज्ञानवतोऽपीति विकल्पमाद्यमङ्गीकृत्य द्वितीयं दूषयति। तदसदिति॥

ज्ञानवतोऽपि तपस्वित्वात्तपःशब्देनोपादानमुचितमिति शङ्कित्वा प्रत्याह। कस्मादित्यादिना॥ तपःशब्देन नासौ गृह्यत इति शेषः॥ तस्य

निवृत्तेश्च। भेदबुद्धिमत एव हि तपःकर्त्तव्यता स्यात्। एतेन कर्मच्छिद्रे ब्रह्मसंस्थतासामर्थ्यम्। अप्रतिषेधश्च प्रत्युक्तः। तथाज्ञानवानेव निवृत्तकर्म्मा परिव्राडिति ज्ञानवैयर्थ्यं प्रत्युक्तम्। यत्पुनरुक्तं यववराहादिशब्दवत्परिव्राजके च रूढो ब्रह्मसंस्थशब्द इति तत्परिहृतमेतत्। तस्यैव ब्रह्मसंस्थतासम्भवान्नान्यस्येति। यत्पुनरुक्तं रूढशब्दा निमित्तं नोपाददत इति। तन्न गृहस्थतक्षपरिव्राजकादिशब्ददर्शनात् गृहस्थितिपारिव्राज्यतक्षणादिनिमित्तोपादाना अपि गृहस्थपरिव्राजका वाश्रमविशेषे विशिष्टजातिमति च गृहस्थ इति परिव्राजक इति च तक्षेति रूढा दृश्यन्ते शब्दाः। न यत्र यत्र तानि निमित्तानि तत्र तत्र वर्त्तन्ते॥ सिद्धभा-

---

च ज्ञानवतोऽविशिष्टत्वं प्रागेवोपदिष्टमित्याह। स एवेति॥ इतश्च परमहंसपरिव्राजको न तपःशब्देन परामृष्ट इत्याह। एकत्वेति॥ तदेव स्फोरयति। भेदेति॥ यत्तु कर्मच्छिद्रे गृहस्थादेरपि ब्रह्मसंस्थतासामर्थ्यमिति तत्प्रत्याह। एतेति॥ अनिवृत्तभेदप्रत्ययस्य ब्रह्मसंस्थत्वासम्भवेनेति यावत्॥ सामर्थ्यं प्रत्युक्तमिति सम्बन्धः॥ यत्तु चतुर्णामपि ब्रह्मसंस्थताया अप्रतिषेध इति आह। अप्रतिषेधश्चेति॥ एकत्वोपदेशेन भेदप्रत्ययनिरासादनिवृत्तभेदप्रत्ययस्यार्थाद्ब्रह्मसंस्थता प्रतिषिद्धेत्यर्थः॥ पारिव्राज्यमात्रेणामृतत्वे ज्ञानवैयर्थ्यमुक्तं परिहरति। तथेति॥ चोद्यान्तरमनूद्योक्तं परिहारं स्मारयति। यत्पुनरुक्तमिति॥ तत्र रूढोऽयं शब्द इति शेषं प्रश्नद्वारा सूचयति। चोद्यान्तरमनूद्य दूषयति। यत्पुनरित्यादिना॥ आदिपदेन पङ्कजादिशब्दा गृह्यन्ते॥ उक्तं प्रपञ्चयति। गृहस्थितीति॥ रूढापीति प्रकृतवाक्योपादानं प्रकृते परमहंसे परिव्राजके ब्रह्मसंस्थपदमित्यत्र हेतुमाह। तुल्येति॥ इतश्च पारमहंस्यमेव प्राप्तमित्याह। अन्यथेति॥

वात्। तथेहापि ब्रह्मसंस्थशब्दो निरस्तसर्वकर्मतत्साधनपरिव्राडेकविषयेऽत्याश्रमिणि परमहंसाख्ये रूढ़ भवितुमर्हति। मुख्यामृतत्वफलश्रवणात्। अतश्चेदमेवैकं वेदोक्तं पारिव्राज्यम्। न यज्ञोपवीतत्रिदण्डकमण्डल्वादिपरिग्रहवान्मुण्डोऽपरिग्रहोऽसङ्ग इति च। श्रुतिरत्याश्रमिभ्यः परमं पवित्रमित्यादि च श्वेताश्वतरीये। न स्तुतिर्न नमस्कार इत्यादिस्मृतिभ्यश्च। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः। तस्मादलिङ्गो धर्मज्ञः अव्यक्तलिङ्ग इत्यादिस्मृतिभ्यश्च। यत्तु साङ्ख्यैः कर्मत्यागोऽभ्युपगम्यते। क्रियाकारकफलभेदबुद्धेः सत्यत्वाभ्युपगमात्। तन्मृषा। यच्च बौद्धैःशून्य-

---

एवकारार्थं कथयति॥ न यज्ञोपवीतेति॥ इतिशब्दः सन्न्यासप्रकरणतथाविधश्रुत्यभावप्रदर्शनार्थः॥ ब्रह्मसंस्थशब्दस्य परमहंसविषयत्वे श्रुत्यन्तरं संवादयति। श्रुतिरिति॥ अत्याश्रमिभ्यः पूर्वाश्रमत्रयमतीत्य सर्वकर्म त्यक्त्वा स्थितेभ्यः परमहंसपरिव्राजकेभ्य इति यावत्। परमं पवित्रं निरतिशयपरिशुद्धिकारणं परमपुरुषार्थसाधनं सम्यग्ज्ञानं प्रोवाचेत्यर्थः। स्मृतिभ्यश्च यथोक्तपारिव्राज्यं सिद्धतीति शेषः॥ अनाशिषमनारम्भमित्यादि वाक्यसङ्ग्रहार्थमादिपदं। कर्मणो बन्धहेतुत्वं तच्छब्दार्थः॥ लिङ्गस्य धर्मकारणत्वराहित्यं तस्मादित्युक्तं। अलिङ्गो धर्मध्वजत्वरहितः। धर्मज्ञो यथावद्धर्मानुष्ठाता। अधर्मज्ञ इति वा पाठः। धर्मविचारनिवारहितस्तत्त्वाचारत्वप्रत्ययवानित्यर्थः। अलिङ्ग इत्युक्तेऽनाश्रमित्वमाशङ्क्याह। अव्यक्तेति॥ न व्यक्तं दण्डेन स्फुटीतं लिङ्गमाश्रमित्वमस्यासावव्यक्तलिङ्गः। किन्त्वदण्डेन स्तुतिस्मृत्युक्तप्रकारेण तदस्यास्तीत्यर्थः। आदि पदं त्यज धर्ममधर्मञ्चेत्यादि ग्रहीतुम् अत्रापि पूर्वपदान्वयः। ननु कर्मनिवृत्तिरुपदिश्यता त्वया साङ्ख्यमतमेवाश्रितं। तेनापि

ताभ्युपगमादकर्तृत्वमभ्युपगम्यते। तदप्यसत् तदभ्युपगन्तुः सत्त्वाभ्युपगमात्। यच्चाज्ञैरलसतया अकर्तृत्वाभ्युपगमः सोऽप्यसत्कारकबुद्धेरनिवर्त्तितत्वात्प्रमाणेन। तस्माद्वेदान्तप्रमाणजनितैकत्वप्रत्ययवत एतत्कर्मनिवृत्तिलक्षणं पारिव्राज्यं ब्रह्मसंस्थत्वञ्चेति सिद्धम्। एतेन गृहस्थस्यैकत्वविज्ञाने सति पारिव्राज्यमर्थसिद्धम्। नन्वग्न्युत्सादनदोषभाक् स्यात्परिव्रजन्। वीरहा वा एष देवानां योऽग्निमुद्वासयत

---

शरीरादिव्यापारोपरमद्वारा ध्याननिष्ठायाः स्वीकृतत्वात्तत्राह। यच्चेति॥ न हि तन्मते कूटस्थात्मधीबलेन नैष्कर्म्यं युक्तम्। क्रियाकारकादिबुद्धेरविवेकस्य च सत्यत्वेन ज्ञानमात्रापनोद्यत्वायोगात्। न च सर्वव्यापारोपरमसम्भवो मनोबुद्ध्यादीनां। तच्छीलत्वात्। नहि कश्चित् क्षणमपीत्यादि स्मृतेः। अतः साङ्ख्यवचो मिथ्यैवेत्यर्थः। ननु बौद्धेनापि नैरात्म्यमिच्छता नैष्कर्म्यमिष्टं तथाच कर्मत्यागमुपदिशता त्वयापि तन्मतमेवानुमोदितं नेत्याह। यच्चेति॥ तदभ्युपगन्तुरित्यत्राकर्तृत्वं तच्छब्दार्थः। दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेदिति स्मृतेः॥ आलस्योपहृतैरज्ञैरकर्तृत्वमुपेयते॥ भवतापि कर्म त्यजता तन्मतमादृतमित्याशङ्क्याह। यच्चाज्ञैरिति॥ अकर्तृत्वाभ्युपगम इति च्छेदः। ते हि मोहादेव कर्म त्यजन्तो न तत्फलं लभन्ते। स कृत्वा राजसन्त्यागं नैव त्यागफलं लभेदिति स्मृतेः। वयं तु प्रमाणवशादेव कर्म त्यजन्तो न व्यामोहमुद्रपत्नमाद्रियामहे। तस्मान्नैष्कर्म्यं श्रुतिस्मृतिप्रसिद्धमप्रत्याख्येयमिति भावः॥ पक्षान्तरे नैष्कर्म्यस्येरमूलत्वे स्थिते फलितमुपसंहरति। तस्मादिति॥ यत्तु कैश्चिदेकाश्रम्यमाश्रितं तत्प्रत्यादिशति। एतेनेति॥ एकत्वविज्ञानेन भेदप्रत्ययस्योपमर्दितत्वोपपादनेनेति यावत्। एकत्वविज्ञानं परोक्षं विवक्षितम्। अपरोक्षस्य पारिव्राज्यमन्तरेणायोगात्तस्योपरतिशब्दितस्य शमादिवत्तत्साधनत्वश्रुतेरिति द्रष्टव्यम्॥ गृहस्थस्य पारिव्राज्यश्रुतिविरोधं शङ्कते। नन्विति॥ एकात्म्यमेव सत्यं द्वैतमसत्यमिति विवेके जाते सत्यग्न्यादेरवस्तुत्वाध्यवसायात्तदनिनिवेशशैथि-

प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति ॥ ३ ॥ तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः

---

इति श्रुतेः । न दैवेनैवोत्पादितत्वादुत्पन्न एव हि स एकत्वदर्शने जाते । अपागादग्नेरग्नित्वमिति श्रुतेः अतो न दोषभाग्गृहस्थः परिव्रजन्निति ।

यज्ञसंस्थोऽमृतत्वमेति तन्निरूपणार्थमाह । प्रजापतिर्विराट् कश्यपो वा लोकानुद्दिश्य तेषु सारजिघृक्षयाऽभ्यतपदभितापं कृतवान् ध्यानं तपः कृतवानित्यर्थः । तेभ्योऽभितप्तेभ्यः सारभूता त्रयी विद्या सम्प्रास्रवत् प्रजापतेर्मनसि प्रत्यभादित्यर्थः । तामभ्यतपत् । पूर्ववत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति

---

त्वान्न तत्त्यागे दोषप्राप्तिरिति दूषयति । न दैवेति ॥ सम्यग्ज्ञाने सत्यग्न्यादेरुत्पन्नत्वे मानमाह । अपागादिति ॥ गृहस्थस्यापि विवेकवतो वैराग्यद्वारा युक्तं पारिव्राज्यमित्याह । अत इति ॥ इतिशब्दो ब्रह्मसंस्थवाक्यव्याख्यानसमाप्त्यर्थः ॥

किन्तद्ब्रह्मेत्याकाङ्क्षायामाह । यज्ञसंस्थ इति ॥ लोकानामभितो दग्धतयाभितापप्रतिभासं व्यवच्छिनत्ति । ध्यानमिति ॥ द्रवात्मत्वाभावे कथं प्रस्रवणं त्रय्याः स्यादित्याशङ्क्याह । पूर्ववदिति ॥ त्रयी विद्या सारजिघृक्षयाऽऽलोचितवानित्यर्थः । कथं तस्य ब्रह्मशब्दवाच्यत्वमित्याशङ्क्य महत्तरत्वादित्याह । कीदृशमित्यादिना ॥ तत्र ब्रह्मशब्दप्रवृत्तौ हेत्वन्तरं

सम्प्रास्रवरुत्तद्यथा शङ्कुना सर्व्वाणि पर्णानि सन्तृ-
ण्णान्येवमोङ्कारेण सर्व्वा वाक् सन्तृण्णा ॐकार एवे
दꣳ सर्वमोङ्कार एवेदꣳ सर्वम् ॥४॥ २३ ॥

---

व्याहृतयः। तान्यक्षराण्यभ्यतपत्तेभ्योऽभितप्तेभ्यः सारभूत ॐकारः सम्प्रास्रवत्तद्ब्रह्म। कीदृशं किंरूपमित्याह। तद्यथा। शङ्कुना पर्णनालेन सर्व्वाणि पर्णानि पत्रावयवजातानि सन्तृण्णानि निबद्धानि व्याप्तानीत्यर्थः। एवमोङ्कारेण ब्रह्मणः। परमात्मनः प्रतीकभूतेन सर्वा वाक् शब्दजातं सन्तृण्णा अकारो वै सर्व्वा वागित्यादि श्रुतेः। परमात्मविकारश्च नामधेयमात्रमित्यत ॐकार एवेदꣳ सर्वमिति द्विरभ्यास आदरार्थः। लोकादिनिष्पादनकथनमप्योंकारस्तुत्यर्थमिति ॥ २३ ॥

---

सूचयति। परमात्मन इति॥ ओंकारावयवस्याकारस्यापि सर्ववाग्व्याप्तिरस्ति किमु वक्तव्यमोङ्कारस्येति मन्वानः श्रुत्यन्तरमुदाहरति अकार इति॥ ओमितीदं सर्वमित्यादिवाक्यमादिपदार्थः॥ ओंकारव्याप्तत्वेऽपि वाग्जातस्य न तस्य सर्व्वात्मत्वमाकाशादिपरमात्मविकारस्य पृथगेव विद्यमानत्वादित्याशङ्क्याह। परमात्मेति॥ सकलमपि जगत्परमात्मविकारत्वात्तदतिरेकेण नास्ति। स च प्रकृतादोंकारान्नातिरिच्यते। एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कार इति श्रुतेः। तस्माद्युक्तमोङ्कारस्य सर्व्वात्मत्वमित्यर्थः। ओंकारं सर्व्वात्मकं ब्रह्मरूपमुपासीतेति विधिसमाप्त्यर्थमितिशब्दः॥ किमित्योङ्कारस्य लोकादिद्वारा निष्पत्तिरुच्यते तत्राह। लोकादीति॥ स्तुतिश्चोपास्यार्था। यत्स्तूयते तद्विधीयत इति स्थितेः। तथा च सिद्धमोङ्कारोपासनममृतत्वफलमितिशब्दः॥ २३॥

ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानाञ्च विश्वेषाञ्च देवानां तृतीयसवनम् । १ । क्व तर्हि

---

सामोपासनप्रसङ्गेन कर्मगुणभूतत्वान्निवर्त्त्योङ्कारं परमात्मप्रतीकत्वादमृतत्वहेतुत्वेन महीकृत्य प्रकृतस्यैव यज्ञस्याङ्गभूतानि सामहोममन्त्रोत्थानान्युपदिदिक्षन्नाह ॥ ब्रह्मवादिनो वदन्ति । यत्प्रातःसवनं प्रसिद्धं तद्वसूनाम् । तैश्च प्रातःसवनसम्बन्धोऽयं लोको वशीकृतः सवनेशानैः । तथा रुद्रैर्माध्यन्दिनेशानैरन्तरिक्षलोकः । आदित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानैस्तृतीयो लोको वशीकृतः । इति यजमानस्य लोकोऽन्यः परिशिष्टो न विद्यते । अतः क्व तर्हि यजमानस्य लोको यदर्थं यजते । न क्वचिल्लोकोऽस्तीत्यभिप्रायः । लोकाय वै यजते यो यजत इति

---

प्रासङ्गिकं हित्वा प्रकृतमनुसन्धत्ते । सामेति ॥ पञ्चविधं सप्तविधञ्च यज्ञाङ्गीभूतं साम तस्योपासनवचनादोङ्कारस्य तद्भक्तेः सुतरामेव कर्मगुणत्वे प्राप्ते ततस्तं व्यावर्त्य ब्रह्मप्रतीकत्वात्कैवल्यहेतुत्वेन तमेव महीकृत्य प्रस्तुतयज्ञाङ्गभूतसामादिविज्ञानविधानं प्रस्तुतं वाक्यमित्यर्थः ॥

सामहोममन्त्रोत्थानसामादिविज्ञानविधित्सया तदपरिज्ञाने दोषमाह । ब्रह्मेत्यादिना ॥ तेषां प्रातःसवनेशानत्वेऽपि यजमानस्य का हानिरित्याशङ्क्याह । तैश्चेति । यथा पृथिवीलोको वसुभिस्तथेति यावत् । अन्तरिक्षलोको वशीकृत इति पूर्वेण सम्बन्धः । तृतीयो लोको द्युलोकाख्यः ॥ अस्तु तत्तद्देवानां तत्तल्लोकवशीकारस्तथापि यजमानस्य लोकित्वे किमायातमित्याशङ्क्याह । इति यजमानस्येति ॥ परिशिष्टलोकाभावोऽतःश-

यजमानस्य लोक इति स यस्तं न विद्यात्कथं कुर्य्यादथ विद्वान्कुर्य्यात् ॥ २ ॥ पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति ॥ ३ ॥ लोकद्वारमपावार्णू २३३ पश्येम त्वा वयꣳ रा ३३३३ऽ३ऊं ३ आ ३३३ ज्या ३ यो ३ आ १२४५

---

श्रुतेः। लोकाभावे च स यो यजमानस्तं लोकस्वीकरणोपायं सामहोममन्त्रोत्थानलक्षणं न विजानीयात्सोऽज्ञः कथं कुर्य्याद्यज्ञं न कथञ्चन तस्य कर्तृत्वमुपपद्यत इत्यर्थः॥ सामादिविज्ञानस्तुतिपरत्वान्नाविदुषः कर्तृत्वं कर्म्ममात्रविदः प्रतिषिध्यते। स्तुतये च सामादिविज्ञानस्याविद्वत्कर्तृत्वप्रतिषेधाय चेति चेङ्गिद्योत वाक्यं। आद्ये चौषस्त्ये काण्डेऽविदुषोऽपि कर्म्मास्तीति हेतुमवोचाम। अथैतद्वक्ष्यमाणं सामाद्युपायं विद्वान् कुर्य्यात् ॥

किन्तद्वेद्यमित्याह। पुरा पूर्वं प्रातरनुवाकस्य शस्त्रस्य

---

त्यर्थः। तर्हि देहपातादूर्द्धमित्येतत् ॥ लोकापेक्षां विनापि विधिवशादागो भविष्यतीत्याशयङ्क्याह। लोकायेति ॥ लोकत्रयस्य वस्वाद्यधीनतया यजमानानधीनत्वे तस्य तदधीनत्वार्थं यज्ञाद्यनुष्ठानमित्याशयङ्क्याह। लोकाभावे चेति ॥ अज्ञो यज्ञं स्वर्गादिसाधनीभूतं कथं कुर्य्यादित्याक्षेपादविद्वत्कर्म्मानुष्ठाननिन्दापरं वाक्यमित्याशयङ्क्याह। सामादीति॥ अथेदं वाक्यं स्तुत्यर्थं निषेधार्थं च भविष्यति नेत्याह। स्तुतये चेति ॥ इतश्चावि-

इति ॥४॥ अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ५ ॥ अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ सम्प्रयच्छन्ति

---

प्रारम्भाज्जघनेन गार्हपत्यस्य पश्चादुदङ्मुखः सन्नुपविश्य स वासवं वसुदैवत्यं सामाभिगायति ॥ लोकद्वारमस्य पृथिवीलोकस्य प्राप्तये द्वारमपावृणु हे अग्ने तेन द्वारेण पश्येम त्वा त्वां राज्यायेति ॥ अथानन्तरं जुहोत्यनेन मन्त्रेण नमोऽग्नये प्रह्वीभूतास्तुभ्यं वयं पृथिवीक्षिते पृथिवीनिवासाय लोकक्षिते लोकनिवासाय पृथिवीलोकनिवासायेत्यर्थः । लोकं मे मह्यं यजमानाय विन्द लभस्व । एष वै मम यजमानस्य लोक एता गन्तास्मि ॥ अत्रास्मिन् लोके यजमानोऽहमायुषः परस्तादूर्द्ध्वं मृतः सन्नित्यर्थः ।

---

ह्यकर्त्तृत्वं निरोद्धुमशक्यमित्याह । व्याख्ये चेति ॥ अटवीष्वेनेष्वित्यादौ विदुषः सन्निधाने तदनुज्ञामन्तरेणाविदुषः कर्म्म कर्त्तुमयुक्तं । प्रत्यवायप्रसङ्गात् । तदसन्निधौ तु तेनापि क्रियमाणं कर्म्म न दुष्यतीत्युपपादितमित्यर्थः ॥ अथशब्दो हेत्वर्थः । सामाद्यविज्ञाने यस्मादुपाकरणमेव प्राप्तं तस्मादित्यर्थः ॥ तानत्र्यं सामादि प्रश्नपूर्वकं विवृणोति । किन्तदित्यादिना ॥ अप्रगीतमृग्जातं यत्तं यत्प्रातःकाले शस्यते प्रातरनुवाकस्तस्येति यावत् । उपाकरणादित्यस्यार्थमाह । प्रारम्भादिति ॥ जघनेनेत्येतद्व्याचष्टे । पश्चादिति ॥ स गार्हपत्यस्य पृष्ठत उदङ्मुखो स्थित्वा वसुदेवताकं सामगानं कृतवानित्यर्थः । स वासवमित्यत्र सशब्दो यजमानविषयः ।

॥ ६ ॥ पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्ज-घनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ॥ ७ ॥ लोकद्वारमपावार्णू २३३ पश्येम त्वा वयं वि रा ३३३३ हुं आ ३३ ज्या यो आ ३२३४५ इति ॥ ८ ॥ अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ९ ॥ अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघ-मित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ सम्प्रयच्छन्ति ॥ १० ॥ पुरा तृतीयसवनस्योपा-

---

स्वाहेति जुहोति। अपजह्यपकम परिघं लोकद्वारार्गल-मित्येतं मन्त्रमुक्त्वोत्तिष्ठति। एवमेतैर्वसुभ्यः प्रातःसवन-सम्बन्धो लोको निष्क्रीतः स्यात्ततस्ते प्रातःसवनं वसवो यजमानाय सम्प्रयच्छन्ति॥

तथाग्नीध्रीयस्य दक्षिणाग्नेर्जघनेनोदङ्मुख उपविश्य स रौद्रं सामाभिगायति यजमानो रुद्रदैवत्यं वैराज्याय॥

---

राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीराज्यमभिगायेत्यर्थः। पृथिव्यां क्षयति वसतीति पृथिवीक्षिदग्निस्तस्मै पृथिवीक्षिते॥ पृथिवीलोके मया लब्धे किं स्यादित्याशङ्क्याह। एष वै मम यजमानस्येति॥ स्वाहाशब्दो मन्त्र-समाप्त्यर्थो होमद्योतकः॥ सर्वेषु मन्त्रो जेतः सामहोममन्त्रोत्थानैरित्यर्थः॥

यथा पृथिवीलोकजयोपायो दर्शितस्तथान्तरिक्षलोकजयोपायोऽपि प्रदर्श्यत इत्याह। तथेति॥ अन्तरिक्षे वायोनित्यन्तरिक्षक्षिद्वायुस्तस्मै

कारणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यं स वैश्वदेवं सामाभिगायति ॥ ११ ॥ लोकद्वारमपावार्णू २३३ पश्येम त्वा वयं स्वा रा ३३३३ ऊं आ २३३ जा ३ यो ३ आ ३४५ इति ॥ १२ ॥ आदित्यमथ वैश्वदेवं लोकद्वारमपावार्णू २३३ पश्येम त्वा वयं साम्रा ३३३३ ऊं ३ आ २३३ जायो ३ आ ३१११ इति ॥ १३ ॥ अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत ॥ १४ ॥

एष वै यजमानस्य लोक एतास्मश्च यजमानः

---

अन्तरिक्षक्षित इत्यादि समानं ॥ तथाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यदैवत्यं वैश्वदैवञ्च सामाभिगायति क्रमेण स्वाराज्याय साम्राज्याय दिविक्षिद्भ्य इत्येवमादिसमानमन्यत् । विन्दताऽपहतेति बहुवचनमात्रं विशेषः । याजमानन्वेतत् । एतास्मात यजमान इत्यादि लिङ्गात् । एष ह वै यजमान एवंवित् । यथोक्तस्य सामादेर्विद्वान्यजस्य

---

वायवे । यथा पृथिव्यन्तरिक्षयोराय् पायसथायुलोकाद्युपायोऽभ्युक्त इत्याह । तथेति ॥ स्वाराज्यमन्तरिक्षेऽतन्त्रं आदित्यानामिव स्वातन्त्र्यमिह विवक्षितं ॥

किमिदं सामाद्यार्त्विज्यमाहो याजमानिकमिति विवक्षायामाह ॥ याजमानन्त्विति ॥ आदिपदेन लोकं मे यजमानायेति-

वरस्तादायुषः स्वाहाऽपहतपरिघमित्युक्त्वोत्ति-
ष्ठति॥ १५ ॥ तस्मा आदित्याश्च विश्वे च देवास्तृ-
तीयसवनꣳ सम्प्रयच्छन्त्येष ह वै यज्ञस्य मात्रां
वेद य एवं वेद य एवं वेद ॥ १६ ॥ २४ ॥ इति
द्वितीयप्रपाठकः ॥ २

---

मात्रां यज्ञयाथात्म्यं वेद यथोक्तम्। य एवं वेद य एवं
वेदेति द्विरुक्तिरध्यायसमाप्त्यर्था ॥ २४ ॥ इति श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीम-
च्छङ्करभगवतः कृतौ छान्दोग्यविवरणे द्वितीयः प्रपा-
ठकः ॥ २ ॥

---

निर्दिशो ऽत्युते ॥ सामादिज्ञानफलं कथयति। एष इति॥ य एवं-
विदित्यस्य व्याख्या। यथोक्तस्येति। तथोक्तं सामादीत्येतदेवमित्युक्त-
प्रकारोक्तिस्तस्य यज्ञयाथात्म्यविदस्तदनुष्ठानद्वारा तत्फलं सम्भवतीत्यर्थः
॥ २४ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपाद-
शिष्यभगवदानन्दज्ञानकृतायां छान्दोग्योपनिषद्भाष्यटीकायां द्वितीयः प्रपा-
ठकः समाप्तः ॥ २ ॥

## तृतीयप्रपाठकप्रारम्भः ।

हरिः । ॐ । असौ वा आदित्यो देवमधु

---

॥ ॐ ॥ असौ वा आदित्य इत्याद्यध्यायारम्भे सम्बन्धो ऽतीतानन्तराध्यायान्ते उक्तः । यज्ञस्य मात्रां वेदेति यज्ञविषयाणि च सामहोममन्त्रोत्थानानि विशिष्टफलप्राप्तये यज्ञाङ्गभूतानि उपदिष्टानि । सर्व्वयज्ञानाञ्च कार्य्यनिर्वृत्तिरूपः सविता महत्या श्रिया दीप्यते । स एष सर्व्वप्राणिकर्मफलभूतप्रत्यक्षं सर्व्वैरुपजीव्यते । अतो यज्ञस्य व्यपदेशानन्तरं तत्कार्य्यभूतसवितृविषयमुपासनं सर्व्वपुरुषार्थेभ्यः श्रेष्ठतमं फलं विधास्यामीत्येवमारभते श्रुतिरसौ वा आदित्यो देवमध्वित्यादि । देवानां मोदनान्मध्विव मध्वसा-

---

ओं श्रीगणेशाय नमः । कर्म्माङ्गावबद्धं विज्ञानं परिसमाप्य कर्म्मफलस्यादित्यस्य स्वतन्त्रोपास्तिविध्यर्थमध्यायान्तरमारभमाणः सम्बन्धं प्रतिजानीते । असाविति ॥ पूर्व्वोत्तरग्रन्थयोः सम्बन्धं प्रतिज्ञातं प्रकटयितुं वृत्तं कीर्त्तयति । अतीतेति ॥ विशिष्टफलं पृथिव्यादिलोकत्रयं समनन्तरसन्दर्भस्य तात्पर्य्यं वक्तुं पातनिकां करोति । सर्व्वेति ॥ तस्य प्रेक्षितत्वं सूचयति । महत्येति ॥ कथं पुनरादित्यस्य सर्व्वप्राणिकर्मफलभूतत्वमित्याशङ्क्य सर्व्वैरुपजीव्यतोपलम्भादित्याह । स एष इति ॥ पातनिकां कृत्वोत्तरग्रन्थमुत्थापयति । अत इति ॥ आदित्यस्य कर्मफलत्वादिति यावत् । तदुपदेशे हेत्वन्तरमाह । सर्व्वपुरुषार्थेभ्य इति ॥ श्रेष्ठतमं फलं क्रमेण मुक्तिलक्षणमस्यास्तीति तथोक्तम् । आदित्ये कर्मफलशब्दप्रवृत्तिनिमित्तमुक्तं व्यक्तीकर्त्तुमाह । वस्वादीनामेति ॥ चकारो विशेषद्योतकार्थः । वस्वादीनामादित्यस्येति सम्बन्धः । तस्य सर्वेषां यज्ञानां

तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरिचयः पुत्राः ॥ १ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः ।

---

वादित्यो वस्वादोनाञ्च मोदनहेतुत्वं वक्ष्यति सर्व्वयज्ञफलरूपत्वादादित्यस्य । कथं मधुत्वमित्याह । तस्य मधुनो-द्यौरेव भ्रमरस्येव मधुर्नास्तिरश्चीनश्चासौ वंशश्चेति तिरश्चीनवंशः । तिर्य्यग्गतेव हि द्यौर्लक्ष्यतेऽन्तरिक्षञ्च मध्वपूपो द्युवंशे लग्नः सन् लक्ष्यत इवातो मध्वपूपसामान्यादन्तरिक्षं मध्वपूपो मधुनः सवितुराश्रयत्वात् । मरीचयो रश्मयो रश्मिस्था आपो भौमाः सवित्राकृष्टाः । एता वा आपः स्वराजो यन्मरीचय इति हि विज्ञायन्ते । ता अन्तरिक्षमध्वपूपस्थरश्म्यन्तर्गतत्वाद्भ्रमरवीजभूताः पुत्रा इव

---

फलरूपत्वादिति हेतुः । वस्वादयश्च कर्मफलभोक्तारस्तत्फलमादित्यं दृष्ट्वा तृप्यन्तीति युक्तमित्यर्थः ॥

आदित्यं मधुइत्युपासीतेत्युक्तं तत्र प्रसिद्धमधुसाम्यमादित्यस्य स्तुत्यक्ता-काङ्क्षापूर्वकं दर्शयति । कथमित्यादिना ॥ दिवि तिरश्चीनवंश-दृष्टौ निमित्तमाह । तिर्य्यग्गतेति ॥ अन्तरिक्षनिवासिभिरुपरि विस्ता-रितनयनैरिति शेषः ॥ अन्तरिक्षे मध्वपूपदृष्टिं कथयति । अन्तरिक्ष-मिति ॥ मधुन इत्युभयत्र सम्बन्धः ॥ मरीचयः पुत्रा इति वाक्यं व्या-चष्टे । मरीचय इति ॥ आपो भूमेराकृष्टा रश्मिस्थाः सन्तीत्यत्र प्रमाण-माह । एता इति ॥ स्वराजः स्वतो भासमानस्य सवितुरिति यावत् । तासां पुत्रत्वं प्रकटयति । ता इति ॥ लोके हि भ्रमरवीजभूता पुत्रा मध्वपूपच्छिद्रस्था दृश्यन्ते एताश्चापोऽन्तरिक्षलक्षणमध्वपूपान्तर्गतर-

ऋच एव मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपः

---

हिता लक्ष्यन्त इति पुत्रा इव पुत्रा मध्वपूपनाड्यन्तर्गता हि भ्रमरपुत्रास्तस्य सवितुर्मध्वाश्रयस्य मधुनो ये प्राञ्चः प्राच्यां दिशि गता रश्मयस्ता एवास्य प्राञ्चः प्रागञ्चनान्मधुनो नाड्यो मधुनाड्य इव मध्वाधारच्छिद्राणीत्यर्थः ॥

तत्रर्च्च एव मधुकृतो लोहितरूपं सवित्राश्रयं मधु कुर्व्वन्तीति मधुकृतो भ्रमरा इव यतो रसानादाय मधु कुर्व्वन्ति तत्पुष्पमिव पुष्पमृग्वेद एव। तत्र ऋग्ब्राह्मणसमुदायस्यर्ग्वेदाख्यत्वाच्छब्दमात्राच्च भोग्यरूपरसनिस्रावासम्भवात्। ऋग्वेदशब्देनात्र ऋग्वेदविहितं कर्म। ततो हि कर्मफलभूतमधुरसनिस्रावसम्भवात्। मधुकरैरिव पुष्प-

---

भिमस्था भवन्ति ततश्चैतास्वप्सु भ्रमरबीजदृष्टिः कर्त्तव्येत्यर्थः। प्राचीदिगन्तेष्वादित्यरश्मिषु प्राचीनमधुनाडीदृष्टिर्विधेयेत्याह। तस्येति॥ मध्वाश्रयस्य लोहितादिरूपं मधु वक्ष्यमाणं तदाधारस्येत्यर्थः। ऋक्षु मन्त्ररूपासु भ्रमरदृष्टिमारोपयति। तत्रेति॥ प्रकृतं मधु सप्तम्यर्थः। तासां मधुकर्तृत्वं साधयति। लोहितेति॥ ऋग्वेदविहिते कर्मणि पुष्पदृष्टिं सम्पादयति। यत इति॥ ऋचो मधुकृत इति मन्त्राणां पृथक्कृतत्वादृग्वेदः पुष्पमित्यृग्वेदशब्देन ब्राह्मणसमुदायस्य वक्तव्यत्वात्कथमृग्वेदविहिते कर्मणि तच्छब्देन लक्षिते पुष्पदृष्ट्याध्यासोऽपि कृतस्ततो मधुनिष्पत्तिरित्याशङ्क्याह। ततो हीति॥ तदेवोपपादयति। मधुकरैरिति॥ लोके तावदपः पुष्पाश्रयाः समुदायमधुकरैर्मधु निर्वर्त्यते तथेहापि मधुकरस्थानीयैरृङ्मन्त्रैस्तद्वेदविहितात्पुष्पस्थानीयात्कर्मणः सकाशादपो गृहीत्वा मधु निष्पाद्यते तस्मात्कर्मणः स्वफलभूतमधुनिष्पत्तेरुपपत्तेस्ता-

स्ता वा एता ऋचः ॥ २ ॥ एतमृग्वेदमभ्य-

---

स्थानीयादृग्वेदविहितात्कर्मण आप आदाय ऋग्भिर्मधु निर्वर्त्यते। कास्ता आप इत्याह ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपा अग्नौ प्रक्षिप्तास्तत्पाकाभिनिर्हृताः। अमृतार्थत्वादत्यन्तरसवत्यश्च आपो भवन्ति। तद्रसानादाय ता वा एता ऋचः पुष्पेभ्यो रसमाददाना इव भ्रमरा ऋच एतमृग्वेदविहितं कर्म पुष्पस्थानीयमभ्यतपन्नाभितापञ्च कृतवत्य इव एता ऋचः कर्मणि प्रयुक्ताः। ऋग्भिर्हि मन्त्रैः शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधु निर्वर्तकं रसं मुञ्चतीत्युपपद्यते पुष्पाणीव भ्रमरैराचोष्यमाणानि। तदेतदाह तस्यग्वेदस्याभितप्तस्य। कोऽसौ रसो ऋङ्मधुकराभितापनिःसृत इत्युच्यते। यशो विश्रुतत्वं तेजो देहगता दीप्तिरिन्द्रियं सामर्थ्योपेतैरिन्द्रियैरवैकल्यं वीर्यं सामर्थ्यं बलमित्यर्थः। अन्नाद्यमन्नञ्च तदाद्यञ्च

---

स्मिन् पुष्पदृष्टिरित्यर्थः। ताः अमृता आप इति वाक्यं प्रश्नपूर्वकं व्याचष्टे। कास्ता इत्यादिना॥ कर्मणि प्रयुक्तत्वमभिनयति। अग्नाविति॥ अग्निपाकादिभिर्निर्हृतत्वमपूर्वात्मत्वं परम्परया मुक्तार्थत्वममृतार्थत्वम्। यद्वा रोहितरूपाद्यतनिर्वर्तकत्वं तदर्थत्वम्। उत्कृष्टफलवत्त्वमत्यन्तरसवत्त्वम्॥

ता वा एता इत्यादि व्याचष्टे। तद्रसानिति॥ यथा हि पुष्पेभ्यो भ्रमराः रसानाददानास्तान्यभितपन्ति तथैते मन्त्रास्तस्मिन् कर्मणि स्थितममृतानपामादाय मधु निर्वर्तयन्तो यथोक्तं कर्माभिमतं समालोचयन्ति

तपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्य-मन्नाद्यꣳ रसोऽजायत ॥ ३ ॥ तद्व्यक्षरत्तदादित्य-मभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् ॥ ४ ॥ १ ॥ अथ येऽस्य दक्षिणा रश्मयस्ता

---

येनोपयुज्यमानेनाहन्यहनि देवानां स्थितिः स्यात्तदन्नाद्य-मेष रसोऽजायत यागादिलक्षणात्कर्मणः। यश आद्यन्ना-द्यपर्य्यन्तं तद्व्यक्षरद्विशेषेणाक्षरदगमत्। गत्वा च तदादि-त्यमभितः पार्श्वतः पूर्व्वभागं सवितुरश्रयदाश्रितवदित्यर्थः॥ अमुष्मिन्नादित्ये सञ्चितं कर्मफलाख्यं मधु भोक्ष्यामहे इत्येवं हि यश आदिलक्षणप्राप्तये कर्म्माणि क्रियन्ते मनुष्यैः केदारनिष्पादनमिव कर्षकैः। तत्प्रत्यक्षं प्रदर्श्यते श्रद्धा-हेतोः। किन्तद्यदेतदादित्यस्योद्यतो दृश्यते रोहितं रूपम्॥१॥ अथ येऽस्य दक्षिणा रश्मय इत्यादि समानम्। यजूंष्येव

---

क्तोत्यर्थः। कथं पुनर्मन्त्राणां भ्रमरस्थानीयानां पुष्पस्थानीयऋग्वेदविहितं कर्माभितप्तवतां फलवत्त्वमित्याशङ्क्याह। एता ऋच इति॥ तासां कर्मणि प्रयुक्तेऽपि किमायातं तदाह। ऋग्भिरिति॥ अभितप्तस्य रसोऽजायतेति सम्बन्धः॥ तं प्रश्नपूर्वकं विशदयति। कोऽसाविति॥ तच्छब्दार्थमाह। यश आदीति॥ अथानुष्ठितकर्मजनितफलं कथमादि-त्यमाश्रयतीत्याशङ्क्याह। अमुष्मिन्निति॥ दृष्टान्ते भोक्ष्यामहे व्रीह्यादिजनितं फलमित्यभिप्रायेण व्रीह्यादिप्राप्त्यर्थमिति शेषः। किन्तत्कर्मफलं यदादि-त्यमाश्रित्य तिष्ठतीत्याशङ्क्याह। तत्प्रत्यक्षमिति॥ कर्मफले प्रत्यक्षे तत्-साधने कर्मणि कर्मिणां श्रद्धासिद्ध्यर्थमिति यावत्॥ तदेव फलं प्रश्नपूर्वकं विशदयति। किमित्यादिना॥ १॥

मध्वन्तरं दर्शयति। अथेति॥ वक्तव्यविशेषं कथयति। यजूंषीति॥

एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥ २ ॥ अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्त-

---

मधुकृतो यजुर्वेदविहिते कर्मणि प्रयुक्तानि। पूर्ववन्मधुकृत इव। यजुर्वेदविहितं कर्म पुष्पस्थानीयं पुष्पमित्युच्यते। ता एव सोमाद्या अमृता आपस्तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपन्नित्येवमादि सर्वं समानं मधु। एतदादित्यस्य दृश्यते शुक्लं रूपम् ॥ २ ॥ अथ येऽस्य प्रत्यञ्चो रश्मय

---

कथं तेषां मधुकृत्त्वं तदाह। पूर्ववदिति ॥ ऋङ्मन्त्राणां ऋग्वेदविहिते कर्मणि प्रयुक्तानां यथापूर्वं मधुकरत्वमुक्तम्। तथा यजुषामपीत्यर्थः ॥ यजुर्वेदविहिते कर्मणि पुष्पदृष्टिमाचष्टे। यजुर्वेदेति ॥ ता अमृता आप इत्यस्य पूर्ववद्व्याख्यानमित्याह। ता एवेति ॥ यजुषामादित्यसम्बन्धि मधु प्रत्यक्षं दर्शयति। एतदिति ॥ २ ॥

दादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णꣳ रूपम् ॥ ३ ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ

---

इत्यादि समानम् । तथा साम्नां मधु । एतदादित्यस्य कृष्णं रूपम् ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मय इत्यादि समानम् । अथर्वाङ्गिरसोऽथर्वाङ्गिरसा दृष्टा मन्त्रा अथर्वाङ्गिरसः कर्मणि प्रयुक्ता मधुकृतः । इतिहासपुराणं पुष्पम् । तयोश्चेतिहासपुराणयोरश्वमेधे पारिप्लवासु रात्रिषु कर्म्माङ्गत्वेन विनि-

---

तृतीयं मधु कथयति । अथेति ॥ ऋचां यजुषाञ्च मधु यथा कथितं तथेति यावत् ॥ तस्य शास्त्रप्रत्यक्षत्वं दर्शयति । एतदिति ॥ ३ ॥

चतुर्थं मधु दर्शयति । अथेति ॥ किन्तत्कर्म इत्याशङ्क्याह । इतिहासेति ॥ तद्ध्याथर्वणानामाङ्गिरसञ्च प्रसिद्धं ब्राह्मणं तद्विहितं कर्म पुष्पं पुष्पस्थानीयमित्यर्थः ॥

यदा प्रसिद्धयोरितिहासपुराणयोरुपादानं तदापि न दूषणमित्याह । तयोश्चेति ॥ अश्वमेधे कर्मणि जामितापरिहारार्थं पारिप्लवो नानाविधोपाख्यानसमुदायो यत्र तत्पारिप्लवमाचक्षीतेति विधिवशात्प्रयुज्यते । तासु रात्रिषु तस्यैव कर्मणोऽङ्गत्वेन मनुर्वैवस्वतो राजेत्येवम्प्रकारयोरितिहासपुराणयोर्विनियोगस्य पूर्वतन्त्रे पारिप्लवाधिकरणेनैव सिद्धत्वात्

रसोऽजायत ॥ २ ॥ तदत्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परः कृष्णꣳ रूपम् ॥ ३ ॥ ४ ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यश इन्द्रियं

---

योगः सिद्धो मध्वेतदादित्यस्य परः कृष्णं रूपमतिशयेन कृष्णमित्यर्थः ॥ ४ ।

अथ येऽस्योर्ध्वा इत्यादि पूर्ववत् । गुह्या गोप्या रहस्या एवादेशा लोकद्वारीयादिविधयः । उपासनानि च कर्माङ्गविषयाणि मधुकृतो ब्रह्मैव । शब्दाधिकारात् प्रणवाख्यं पुष्पम् ॥

समानमन्यत् । मध्वेतदादित्यस्य मध्ये क्षोभत इव समाहितदृष्टेर्दृश्यते सञ्चलतीव । ते वा एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः । केषां रसानामित्याह ।

---

तत्सम्बन्धिकर्म पुष्पमित्यर्थः । अस्यापि मधुनः शास्त्रप्रत्यक्षतामाह । मध्वेतदिति ॥ ४ ॥

पञ्चमं मधु दर्शयति । अथेति ॥ लोकद्वारीयादिविधयो लोकद्वारमपावृणु पश्येम त्वा वयमित्यादयः ॥ ब्रह्मशब्दार्थमाह । शब्दाधिकारादिति ॥ ऋगादिशब्दानां प्रकृतत्वादित्यर्थः ॥

अस्यापि मधुनः शास्त्रवशात्प्रत्यक्षतामाह । मध्वेतदिति ॥ समाहितदृष्टेः शास्त्रार्थे समाहितचित्तस्येत्यर्थः ॥ पञ्च मधूनि व्याख्याय तेषां सर्वेषां ध्येयत्वसिद्ध्यर्थं स्तुतिं प्रकुरुते । ते वा एते इति ॥ तस्मात्तेषामिति सम्बन्धः । कर्मणि विनियुक्तत्वेन तदङ्गत्वात्तद्भावापत्तिः । वेदानां

वीर्य्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदा-दित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये-क्षोभत इव ॥ ३ ॥ ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एता-न्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृ-तानि ॥ ४ ॥ ५ ॥

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना

---

वेदा हि यस्माल्लोकनिष्पन्दित्वात्सारा इति रसास्तेषां रसानां कर्मभावापन्नानामप्येते रोहितादिविशेषा रसा अत्यन्तसारभूता इत्यर्थः । तथा अमृतानाममृतानि । वेदा ह्यमृता नित्यत्वात्तेषामेतानि रोहितादीनि रूपाण्य-मृतानि । रसानां रसा इत्यादि कर्मस्तुतिरेषा । यस्यैवं विशिष्टानि अमृतानि फलमिति ॥ ५ ॥

तत्तत्र यत्प्रथमममृतं रोहितरूपलक्षणं तद्वसवः प्रा[illegible]:-सवनेशाना उपजीवन्त्यग्निना मुखेनाग्निना प्रधानभूतेना-ग्निप्रधानाः सन्त उपजीवन्तीत्यर्थः । अन्नाद्यं रसोऽजायत

---

कार्य्यत्वेऽपि प्रयत्नपूर्वकत्वाभावान्नित्यत्वं या मधुनि स्तुतिः सा कर्मस्तुति-रित्याह । रसानामिति ॥ कर्मस्तुतिमभिनयति । यस्यैवमिति ॥ रसानां रसाः । अमृतानाममृतानीत्येवं विशिष्टान्यमृतानि यस्य फलं कर्मफलस्य महाभाग्यं किं वक्तव्यमिति सूच्यते कर्मेत्यर्थः ॥ ५ ॥

अमृतानि ध्येयान्युक्त्वा तदुपजीविनो देवतागणाननुचिन्तनीयाननुपदि-शति । तत्रेति ॥ कथ[illegible]माहं कवलं स्तहोत्व यथा लाकोऽन्नः[illegible]ति

मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादु-

---

इति वचनात्कवलग्राह्यमश्नन्तीति प्राप्तं तत्प्रतिषिध्यते । न वै देवा अश्नन्ति न पिबन्तीति कथं तर्ह्युपजीवन्तीत्युच्यते । एतदेव हि यथोक्तममृतं रोहितरूपं दृष्ट्वोपलभ्य सर्वकरणैरनुभूय तृप्यन्ति । दृशेः सर्वकरणद्वारोपलब्ध्यर्थत्वात् । ननु रोहितं रूपं दृष्ट्वेत्युक्तम् । कथमन्येन्द्रियविषयत्वं रूपस्येति । न । यशआदीनां श्रोत्रादिगम्यत्वात् । श्रोत्रग्राह्यं यशः । तेजोरूपञ्चाक्षुषमिन्द्रियं विषयग्रहणकार्यानुमेयं करणसामर्थ्यम् । वीर्यं बलं देहगतम् । उत्साहः प्राणवत्ता । अन्नाद्यं प्रत्यहमुपजीव्यमानं शरीरस्थितिकरं यद्भवति । रसो ह्येवमात्मकः सर्वः । यं दृष्ट्वा तृप्यन्ति सर्वे ।

देवा दृष्ट्वा तृप्यन्तीत्येतत्सर्वं स्वकरणैरनुभूय तृप्यन्तीत्यर्थः । आदित्यसंश्रयाः सन्तो वैगन्ध्यादिदेहकरणदो-

---

न्नादित्येतत् ॥ ननु अशनपानाभावे न युक्तमुपजीवनवचनमित्याशङ्क्य परिहरति । कथमित्यादिना ॥ चक्षुर्मात्रं वक्तव्ये कथं सर्वकरणैरित्यधिकमुच्यते तत्राह । दृशेरिति ॥ चक्षुषैव रूपग्रहणमिति नियममाश्रित्य शङ्कते । नन्विति ॥ कर्मफलभूतस्य रसस्य लोहिताद्यतात्मकस्य नास्ति चक्षुर्मात्रग्राह्यत्वमिति परिहरति । नेत्यादिना ॥ किमेतावता रसस्यायातं तदाह । रसो हीति । तस्यापि श्रोत्रादिग्राह्यतेति शेषः ॥

एतदेवेत्यादिवाक्यमुपसंहरति । देवा इति ॥ किं तेषां स्वतन्त्राणां तृप्तिर्नेत्याह । आदित्येति ॥ वैगन्ध्यं दौर्गन्ध्यम् । आदिपदेन सत्त्वाविता

द्यन्ति ।२। स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥३॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता ॥

---

परिहिताश्च । किन्ते निरुद्यमा अमृतमुपजीवन्ति न कथम् । तर्ह्येतदेव रूपमभिलक्ष्याधुना भोगावसरो नास्माकमिति बुद्ध्वाभिसंविशन्त्युदासते । यदा वै तस्यामृतस्य भोगावसरो भवेत्तदैतस्मादमृतादमृतभोगनिमित्तमित्यर्थः । एतस्माद्रूपादुद्यन्त्युत्साहवन्तो भवन्तीत्यर्थः । न ह्यनुत्साहवतामननुतिष्ठतामलसानां भोगप्राप्तिर्लोके दृष्टा ॥

स यः कश्चिदेतदेवं यथोदितमृङ्मधुकरतापरससङ्क्षरणमृग्वेदविहितं कर्म पुष्पात्तस्य चादित्यसंश्रयणं रोहितरूपत्वञ्चामृतस्य प्राचीदिग्गतरश्मिनाडीसंस्थतां वसुदेवभोग्यताम् । विद्वांश्च वसुभिः सहैकतां गत्वा अग्निना मुखेनोपजीवनं दर्शनमात्रेण तृप्तिञ्च स्वभोगावसरमुद्यमनं तत्कालाभावे च संवेशनं वेद सोऽपि वसुवत्सर्वं तथैवा-

---

सर्वेऽपि देहकरणदोषा गृह्यन्ते । एतस्माद्रूपादिति ॥ व्याख्यातस्यानुवादमात्रम् । उत्साहवतां देवानां यथोक्तामृतोपजीवित्वमित्यत्र लोकप्रसिद्धिमनुकूलयति । न ह्येति ॥

पाठक्रमेणोक्तं ध्येयस्वरूपमनूद्य स्वाधिकारे ध्यानविधिं दर्शयति । स य इति ॥ वसुदेवभोग्यता वसुभिर्दैवैरुपजीव्यत्वमिति यावत् । एतदित्यस्याकं मधु निर्दर्शयति । एवं सद्वाक्यं विशदयति । यथोदित-

॥ ४ ॥ ६ ॥ अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति॥१॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ

सुभवति। कियन्तं कालं विद्वांस्तदमृतमुपजीवतीत्युच्यते स विद्वान् यावदादित्यः पुरस्तात्प्राच्यां दिश्युदेता पश्चात्प्रतीच्यामस्तमेता तावद्वसूनां भोगकालस्तावन्तमेव कालं वसूनामाधिपत्यं पर्य्येता परितो गन्ता भवतीत्यर्थः। न यथा चन्द्रमण्डलस्थः केवलकर्म्मपरतन्त्रो देवानामन्नभूतः। किन्तर्ह्ययमाधिपत्यं स्वाराज्यं स्वराड्भावञ्चाधिगच्छति ॥६॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्यादि समानम्। स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्ततो

मिति ॥ तथैव श्रुत्युक्तक्रमेणैवेत्यर्थः। भोगकालपरिमाणं प्रश्नपूर्वकं निर्धारयति। कियन्तमिति ॥ आधिपत्यं स्वाराज्यमिति विशेषणयोस्तात्पर्यमाह। न यथेति ॥ ६ ॥

प्रथमममृतमधिकृत्य चिन्तनीयमुक्त्वा द्वितीयममृतमाश्रित्य तद्दर्शयति अथेति ॥ विद्याफलं कथयति। स यावदिति ॥ यावद्वसूनां भोगकालस्ततो द्विगुणो रुद्राणां भोगकालः। यथा प्रथमामृतध्यायिनां

स्वाराज्यं पर्य्येता ॥ ४ ॥ ७ ॥ अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता ॥ ४ ॥ ८ ॥ अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा

---

द्विगुणं कालं दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणां तावद्भोगकालः ॥ ७ ॥

---

वसुभिस्तुल्यो भोगकालस्तथा द्वितीयामृतध्यायिनामपि रुद्रैस्तुल्यो भोगकाल इत्यर्थः ॥ ७ ॥

इतराम्रतध्यायिनां फलानि निर्दिशति। तथेति॥ विपर्य्ययेण पुरस्ताद्दक्षिणतोऽधस्ताच्चेत्यर्थः। यथा पुरस्तादुदेता पश्चादस्तमेता ततो दक्षिणतो द्विगुणेन कालेनोदेता उत्तरतश्चास्तमेतेत्युक्तम्। तथा ततो द्विगुणेन कालेन पश्चादुदेता पुरस्ताच्चास्तमेता तावानादित्यानां भोगकालः। तृतीयामृतध्यायिनामपि तावानेव भोगकालः। ततो द्विगुणेन कालेन यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता तावान्मरुतां भोग-

तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविश-न्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवा-मृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्ये-तस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पश्चा-दुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्य्येता ॥४॥ ९ ॥ अथ यत्पञ्च-मममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपा-दुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद साध्याना-मेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्मा-द्रूपादुदेति ॥ ३ ॥ स यावदादित्य उत्तरत

तथा पश्चादुत्तरत ऊर्द्ध्वमुदेता विपर्य्ययेणास्तमेता। पूर्व-स्मात्पूर्वस्माद्‌द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणां दर्शनम्। सवितुश्चतुर्दिशमिन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य

काल:। चतुर्थामृतध्यायिनामपि तावानेव भोगकाल:। ततो द्विगुणेन कालेनोर्द्ध्वमुदेता अधस्तादस्तमेता तावान् साध्यानां भोगकाल:। पञ्चमा-मृतचिन्तकानामपि तावानेवेत्यर्थ:। यत्पूर्वपूर्वोदयास्तमयकालापेक्षया द्विगुणेन कालेनोत्तरोत्तरोदयास्तमयावित्युक्तम्। तत्पराणविरुद्धमिति

उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेता ऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता ॥ ४ ॥ १० ॥

तुल्यत्वं हि पौराणिकैरुक्तम् ॥ मानसोत्तरस्य मूर्द्धनि मेरोः प्रदक्षिणावृतेस्तुल्यत्वादिति ॥

शङ्कते। पूर्वस्मात्पूर्वस्मादिति॥ कथं त्वयुक्तं स्यात् अथास्य पुराणविरुद्धतेत्याशङ्काह। सवितुश्चेति॥

उक्तमेव सङ्क्षिपति। मानसोत्तरस्येति॥ महागिरेर्मेरोः प्राकारवत्परितः स्थितस्य मूर्द्धनि संलग्नस्य चक्राख्यस्य सवितुर्मेरोः प्रदक्षिणावृतेस्तुल्यत्वात्। कालाधिक्ये कारणाभावाच्च। चतसृष्वपि पुरीषु उदयास्तमयकालस्य तुल्यत्वम्॥ उक्तं हि विष्णुपुराणे। शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम्। विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान् द्वे पुरे तथेति॥ लैङ्गे चोक्तम्। मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी। दक्षिणे भानुपुत्रस्य वरुणस्य तु वारुणे। सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः। अमरावती संयमिनी सुखा चैव विभा क्रमात्। लोकपालोपरिष्टात्तु सर्वतो दक्षिणायने। काष्ठांगतस्य सूर्य्यस्य गतिर्या तां निबोधत। दक्षिणां प्रक्रमेद्भानुः क्षिप्तेषुरिव धावति। पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः। सर्वैः सांयामनैः सौरो ह्युदयो दृश्यते द्विजाः। स एवं सुखवत्यान्तु निशान्तस्थः प्रदृश्यते। अस्तमेति तदा सूर्यो विभायां विश्वदृग्विभुः॥ यथा प्रोक्तोऽमरावत्यां यथाऽसौ वारितस्करः। तथा संयमिनीं प्राप्य सुखाञ्चैव विभां खगः॥ यदा पराह्णस्त्वाग्नेय्यां पूर्वाह्णो नैर्ऋते द्विजाः। तदा त्वपररात्रिश्च वायुभागे सुदारुणः॥ ऐशान्यां पूर्वरात्रस्तु गतिरेवास्य सर्वत इति॥ तथा चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्रैशकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्ययामं संयमिन्यां उदयं चकारेति। सविता एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रे अस्तमयः। आग्नेये तृतीययामः। नैर्ऋतिकोणे प्रथमो यामः। वारुणे उदयः। यदा च वारुणे मध्याह्नस्तदा याम्येऽस्तमयः। नैर्ऋतिकोणे तृतीयो यामः। वायव्ये प्रथमयामः। सौम्ये उदयम्। यदा च

अतोक्तः परिहार आचार्यैरमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्दासः स्यात्। उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिस्तदत्यय-श्चास्तमयं न परमार्थत उदयास्तमये स्तः। तन्निवासिनाञ्च प्राणिनामभावे तान् प्रति तेनैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति चक्षुर्गोचरापत्तेस्तदत्ययस्य चाभावात्॥

---

सौम्ये मध्याह्नस्तदा वारुणेऽस्तमयः। वायव्ये तृतीययामः। ईशानकोणे प्रथमो यामः। ऐन्द्रे उदयः। तथाग्नेये कोणे वर्त्तमानस्तत्स्थानां मध्यं दिनम्। यमेन्द्रपुर्य्योराद्यतृतीययामौ। नैर्ऋतीशानकोणयोरुदयास्तमयौ चकारेणैवं सर्व्वासु दिक्षु चेति पौराणिके दर्शने तद्विरुद्धमिदं श्रुत्योक्त-मित्यर्थः॥

यद्यपि श्रुतिविरोधे स्मृतिरप्रमाणं तथापि यथाकथञ्चिद्विरोधपरिहारं द्रविडाचार्य्योक्तमुपपादयति। अतेति॥ यदाऽमरावती शून्या स्यात्तदा हि तां प्रति पुरस्तादुदेतीति प्रयोगश्शून्यत्वाद्वसूनां भोगान्तः। एवमुत्तरासां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिः॥ अत इमां वचनव्यक्तिमाश्रित्य तमेव परिहारमाह। अमरावत्यादीना-मिति॥ तथापि कथं विरोधसमाधिस्तत्राह। उदयश्चेति॥ यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः। तिरोधानञ्च यत्रैति तदेवास्तमयं रवेः॥ नैवास्तमयमर्कस्य नोदयः सर्व्वदा सतः। उदयास्तमये नाम दर्शना-दर्शने रवेरिति॥ अमरावत्यादिपुरीषु पूर्व्वपूर्व्वापेक्षयोत्तरोत्तरोत्को-द्वासकालद्वैगुण्यमस्तु। आस्ताञ्च दर्शने सवितुरुदयास्तमयौ। स वा एष न कदाचनास्तयेति नोदेतीति श्रुतेर्व्वस्तुतो नोदयास्तमयौ स्तः तथाच पुरीषु तुल्यत्वेन न कृतः सवितुरुदयास्तमयकालवैषम्यमयुक्तमित्याश-ङ्क्याह। तन्निवासिनाञ्चेति॥ भोगकालद्वैगुण्यं सवितृगतेराधिक्यापे-क्षया न श्रुत्योच्यते येन पुराणविरोधः किन्त्वमरावत्यादीनां पुरीणां दैत्योपहतानां पूर्व्वपूर्व्वापेक्षयोत्तरोत्तरपुरीणां द्विगुणेन कालेनोद्वासा-त्तदाश्रयोत्तरोत्तरस्थानेषु भोगकाले द्वैगुण्यं श्रुत्योक्तमिति भावः॥

तथाऽमरावत्याः सकाशाद्द्विगुणकालं सांयमिनी पुरी वसत्यतस्तन्निवासिनः प्राणिनः प्रति दक्षिणत इवोदेत्युत्तरतोऽस्तमेतीत्युच्यतेऽस्मद्बुद्धिस्थापेक्ष्य तथोत्तरास्वपि पुरीषु योजना। सर्वेषाञ्च मेरुरुत्तरो भवति। यदामरावत्यां मध्याह्नगतः सविता तदा सांयमिन्यामुद्यन्दृश्यते तत्र मध्याह्नगोचरो वारुण्यामुद्यन्दृश्यते॥

---

अथोद्गासकालाधिक्याद्भोगव्युतिकालाधिक्यं न भोगकालाधिक्यमत आह। तथेति। यथोद्गासकालद्वैगुण्यमुक्तं तद्वदिति यावत्। अमरावतीनिवासिप्राणिवर्गापेक्षया संयमिनीनिवासिनः प्राणिनः प्रति द्विगुणेन कालेन सवितुरुदयास्तमयाविति युक्तं वक्तुम्। दर्शनादर्शनयोर्द्विगुणकालभावित्वात्। न च तन्निवासिदृष्ट्यपेक्षया दक्षिणोत्तरयोरुदयास्तमयौ। तत्तद्दृष्ट्या पूर्वपश्चिमयोरेव तद्भावात्। अस्मद्बुद्धिमपेक्ष्य तु दक्षिणत उदेति उत्तरतश्चास्तमेतीत्युच्यते। इव शब्दस्तयोस्तन्निवासिजनापेक्षया दक्षिणोत्तरस्थयोरसत्त्वं द्योतयतीत्यर्थः॥ यथाऽमरावत्यपेक्षया संयमिन्यामुद्गासकालाधिक्यमुक्तं तथा तदपेक्षया वारुण्यां तदपेक्षया विभायां तत्कालाधिक्यमवधेयमित्याह। तथेति॥ संयमिनीस्थानभीप्स्य बहुवचनम्॥ इतवास्मद्बुद्धिमपेक्ष्य दक्षिणगत्याऽऽदित्यास्तमयमित्याह। सर्वेषाञ्चेति॥ उद्यन्तमादित्यं पुरतोऽवलोकयतां वामभागे स्थितत्वान्मेरुः सर्वेषामेवोत्तरतो भवति। तथाचोदयास्तमयाभ्यां पूर्वापरदिग्विभागाच्च तत्पुरवासिदृष्ट्यपेक्षया दक्षिणत इत्यादिवचनम्। किन्त्वस्मद्बुद्ध्यपेक्षयैवेत्यर्थः। उद्गासकालद्वैगुण्यापेक्षया भोगकालद्वैगुण्यमित्युक्तम्॥ सम्प्रति सवितृगत्याधिक्यापेक्षयैव भोगकालाधिक्यं किं न स्यादित्याशङ्क्य पुराणविरोधसमाधानसम्भवान्नैवमित्याह। यदेत्यादिना॥

तयोत्तरस्यां प्रदक्षिणाष्टत्वेतुल्यत्वात्। इलावृतवासिनां सर्वतः पर्वतप्राकारनिवारितादित्यरश्मीनां सवितोर्द्ध्व दृष्टोदेताऽस्तङ्गतश्च ता दृश्यते। पर्वतोर्द्ध्वच्छिद्रप्रवेशात्म-विल्पप्रकाशस्य। तयर्गोदृष्टतोपजीविनामदृतानाश्च हिगु-णोत्तरोत्तरवीर्य्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेन।

---

यथा संयमिन्यां मध्याह्नगो वारुण्यामुद्यन् भवति तथा तस्यां मध्याह्नगो विभायामुद्यन्दृश्यत इत्याह। तथेति॥ उक्तञ्च वायुप्रोक्ते। मध्यगस्त्वमरावत्यां यावद्भवति भास्करः। वैवस्वते संयमने उदयंस्तत्र दृश्यते॥ सुखायामर्द्धरात्रश्च विभायामस्तमेति चेति। कथं पुनः स याव-दादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता हिस्तावदूर्द्ध्व उदेत ऽस्तङ्गत-मेतेत्युच्यते। न हि तत्रोद्दासकालस्य बाधितत्वमस्ति येनोदयास्तमय-कालाधिक्याद्भोगकालाधिक्यं स्यादत आह। इलावृतेति॥ मेरोश्चतु-र्दिशमिलावृतं नाम वर्षं प्रसिद्धम्। तन्निवासिनां प्राणिनामुभयतः पर्व्व-ताभ्यां मानसोत्तरसुमेरुभ्यां प्राकारस्थानीयाभ्यामुभयोर्द्धस्थितमाच्छाद्य-णाविनिवारितादित्यरश्मीनामूर्द्धमुदेताऽस्तङ्गतमेता च सविता दृश्यते। इवशब्दस्तूदयास्तमययोर्वस्तुतोऽसत्त्वद्योतनार्थः॥ कथं सवितोर्द्धः सन्नु-देत्यस्तङ्गतमेति तत्राह। पर्व्वतेति॥ सर्व्वावृतप्रकाशस्य पर्व्वतयोरुप-रितने छिद्रे प्रवेशादधोवर्त्तिनामप्राणिनामुपरि प्रसारितनेत्राणां साविर्त्त प्रकाशं पश्यतां तत्रोद्यन्नेव सवितोपलभ्यते प्रदेशान्तरे च दृश्यमानोऽध-स्तादिवास्तमेति। यथोपरिष्टादवस्थैरुपलभ्यमानो मेघस्ततो दूरादृश्यो भूतललग्नश्चेवावसीयते तथेहापीत्यर्थः॥ भोगकालस्याविरोधेनाधिक्य-मापाद्य तेनैव लिङ्गेनातिशयवत्त्वममृतादेरपि कथयति। तथेति॥ भोग-कालाधिक्ये सतीति यावत्। अनुमीयते कल्पते। यस्तु भोगकाल-माकल्प्योद्यमनामन्तरं तदभावं ज्ञात्वोपरमणमन्यादिसत्त्वं दृष्टिमालेप

अथ तत ऊर्द्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥ न वै तत्र

---

ब्रह्मनसंवेद्यनादि देवानां रुद्रादीनां विदुषश्च समानम् ॥ ८ ॥ ६ ॥ १० ॥

कृत्वैवमुदयास्तमनेन प्राणिनां स्वकर्मफलभोगनिमित्तमनुग्रहं तत्कर्मफलोपभोगक्षये तानि प्राणिजातान्यात्मनि संहृत्याथ ततस्तस्मादनन्तरं प्राण्यनुग्रहकालादूर्द्ध्वः सन्नात्मन्युदेत्योद्गम्य यान्प्रत्युदेति तेषां प्राणिनामभावात्-स्वात्मस्थो नैवोदेता नास्तमेतैकलोऽद्वितीयोऽनवयवो मध्ये स्वात्मन्येव स्थाता। तत्र कश्चिद्विद्वान् वस्वादिसमाचरणो रोहिताद्यमृतभोगभागी यथोक्तक्रमेण स्वात्मानं सविता-रमात्मत्वेनोपेत्य समाहितः सन्नेतं मन्त्रं दृष्ट्वोत्थितोऽन्यस्मै पृष्टवते जगाद यतस्त्वमागतो ब्रह्मलोकात्किं तत्राप्यहो-

---

यद्यमृतं तत्त्वं विदुषोऽपि कल्पते देवैः समानमित्याह। ब्रह्मनेति॥ पञ्चभिः पर्य्यायैर्मधुविद्या यथावदुक्ताः॥ ८ ॥ ६ ॥ १० ॥

क्रमेण मुक्तिफलपर्य्यवसायित्वं तस्य दर्शयितुमनन्तरवाक्यमवतारयति। कृत्वेत्यादिना॥ तस्मात्प्राण्यनुग्रहकालादनन्तरमिति। तच्छब्दार्थः। ऊर्द्ध्वः समुत्कृष्टीभूतो वर्त्तमान इति यावत्। आत्मन्युदेत्यस्य महिम्नि प्रकाशं संक्षिप्येतत्। स्थातेति प्रयोगात्क्रममुक्तिरत्र विवक्षिता। तत्र विद्वदनुभवं प्रमाणयति। तत्रेति॥ क्रममुक्तिः सप्तम्यर्थः। यथोक्तक्रमेणाग्नी वा आदित्यो देवमश्चित्यादिना पञ्चाङ्कतत्वेन स्थितमित्यर्थः। समात्मानं वेद्यतया विद्वदात्मस्थभूतमित्यर्थः। आत्मत्वेनोपेत्याहंग्रहेण

न निम्लोच नोदियाय कदाचन देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥ न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥

---

रात्राभ्यां परिवर्त्तमानः सविता प्राणिनामायुः क्षपयति यथेहास्माकमित्येवं पृष्टः प्रत्याह ।

तत्त्व यथा पृष्टे यथोक्ते चार्थे एष श्लोको भवति तेनोक्तो योगिनेति श्रुतेर्वचनमिदम् । न वै तत्र यतोऽहं ब्रह्मलोकादागतस्तस्मिन् न वै तत्रैतदस्ति यत्पृच्छसि । न हि तत्र निम्लोचास्तमगमत्सविता न चोदीयायोद्गतः कुतश्चित्कदाचन कस्मिंश्चिदपि काले इति । उदयास्तमयवर्जितो ब्रह्मलोक इत्युपपन्नमित्युक्तः शपथमिव प्रतिपेदे । हे देवाः साक्षिणो यूयं शृणुत यथा मयोक्तं सत्यं वचस्तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विरुद्धेयमप्राप्तिर्ब्रह्मणो माभूदित्यर्थः । सत्यं तेनोक्तमित्याह

---

गच्छतीत्येतत् ॥ कथं प्रश्न इत्याकाङ्क्षायामाह । यात इति ॥ लब्धब्रह्मोपदेशो ब्रह्मविद्ब्रह्मणो वियुक्तावस्थायां केनचित् पृष्टः प्रत्युवाचेत्यर्थः ॥

कथं प्रत्युक्तिरिति तत्राह । तत्त्वेति ॥ श्लोकमुपादाय व्याकरोति । न वै तत्रेति । न निम्लोचेति ॥ निम्लोचत्यस्मिन्नर्थे छान्दसः प्रयोगः । इतिपदं पूर्वार्द्धव्याख्यासमाप्त्यर्थः ॥ उत्तरार्द्धमुत्थापयति ॥ उदयास्तमयेति ॥ श्लोकत्वाविशेषादितरलोकवद्ब्रह्मलोकोऽपि नोदयास्तमयवर्जित इत्युक्तो विद्वानुत्तरार्द्धेन शपथं कुर्वन् परिहरतीत्यर्थः ॥ एवं मन्त्रदृक् शपथद्वारा निर्णीतेऽर्थे न श्रद्धेयाद्या किमर्था श्रुतिरित्याश-

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥ इदं वाव तज्ज्ये-

---

ष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वान्तेवासिने ॥ ५ ॥

---

श्रुतिर्न ह वा अस्मै । यथोक्तब्रह्मविदे नोदेति न निम्लोचति नास्तमेति किन्तु ब्रह्मविदेऽस्मै सकृद्दिवा हैव सदैवाहर्भवति स्वयं ज्योतिष्ट्वाद्य एतां यथोक्तां ब्रह्मोपनिषदं वेद गुह्यं वेद॥

एवं तत्त्वेण वंशादित्रयं प्रत्यक्षतत्सम्बन्धञ्च यच्चान्यद-वोचाम एवं जानातीत्यर्थः। विद्वानुदयास्तमयकाला-परिच्छेद्यं नित्यमजं ब्रह्म भवतीत्यर्थः॥ तद्धैतन्मधुज्ञानं ब्रह्मा हिरण्यगर्भो विराजे प्रजापतये उवाच। सोऽपि मनवे। मनुरिक्ष्वाक्वादिभ्यः प्रजाभ्यः प्रोवाचेति विद्यां स्तौति ब्रह्मादिविशिष्टक्रमागतेति। किञ्च। तद्धैतन्मधुज्ञानमुद्दाल-कायारुणये पिता ब्रह्मविज्ञानं ज्येष्टाय पुत्राय प्रोवाच।

---

ह्याह। सत्यमिति॥ न हेत्याद्यां श्रुतिमादाय व्याचष्टे। यथोक्तेति॥ ब्रह्मोपनिषदमित्यस्यार्थमाह। वेदगुह्यमिति॥

एवं शब्दमादाय व्याकरोति। एवमित्यादिना॥ वंशादि त्रयं तिर-श्चीनवंशो मध्वपूपो मधुनाडयश्चेत्येवं रूपमित्यर्थः। प्रत्यक्षतत्सम्बन्धं च लोहिताद्यक्षतेभ्यो रोहितवस्वादीनां सम्बन्धमित्यर्थः। अन्यदित्युद्यमनसंवेशना-दि गृह्यते॥ उक्तविद्याफलमुपसंहरति। विद्वानिति ननुविद्या सफला चे-दुक्ता तर्हि किमुच्चरत्यन्येनेत्याशङ्क्याह। तद्धैतदिति॥ स्तुतिमेवाभिनयति। ब्रह्मादीति॥ तद्धैतदुद्दालकायेत्यादिना विद्याया योग्यं पात्रं प्रदर्श्य तद्व्याचष्टे। किञ्चेति॥ इतस्तुत्यर्हमेतद्विज्ञानमित्यर्थः॥ मधुवि-ज्ञानं व्याकरोति। ब्रह्मविज्ञानमिति। तस्य परोक्षत्वं व्यावर्त्त-

ष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्याय वान्ते-
वासिने ॥५॥ नान्यस्मै कस्मैचन यद्यप्यस्मा इमा-
मद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव
ततोभूय इत्येतदेव ततो भूय इति ॥६॥ ११ ॥

---

इदं वाव तद्यथोक्तम्। अन्योऽपि ज्येष्ठाय पुत्राय सर्वप्रिया-र्हाय ब्रह्म प्रब्रूयात् ॥

प्राणाय्याय योग्यायान्तेवासिने शिष्याय। नान्यस्मै कस्मैचन प्रब्रूयात्तीर्थद्वयमनुज्ञातमनेकेषां प्राप्तानां तीर्थानामाचार्य्यादीनाम्। कस्मात् पुनस्तीर्थसङ्कोचनं विद्यायाः कृतमित्याह। यद्यप्यस्मै आचार्य्याय इमां कश्चित् पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि दद्यादस्या विद्याया निष्क्रयार्थमाचार्य्याय धनस्य पूर्णां सम्पन्नां भोगोपकरणैर्नासावस्य निष्क्रयो यस्मात्ततोऽपि दानादेतदेव यन्मधुविद्यादानं भूयो बहुतरफलमित्यर्थः द्विरभ्यास आदरार्थः ॥ ११ ॥

---

यत इदं वावेति ॥ अथ ज्येष्ठाय पुत्राय ब्रह्म वक्तव्यमिति पूर्वेषामयं नियमो नेदानीन्तनानामित्यत आह। अन्योऽपीति ॥

पात्रान्तरमनुजानाति प्राणाय्यायेति ॥ पुत्रशिष्याभ्यां पात्रान्तरं प्रत्याचष्टे। नेति ॥ तीर्थद्वयं विद्याप्रदानेऽधिकारिद्वयमित्यर्थः। निर्द्धारणे षष्ठी। आचार्य्यो विद्यादाता। आदिपदाद्धनदायी श्रोत्रियो मेधावी च गृह्यते ॥ सर्वेषामर्थिनामत्राधिकारमाशङ्क्य दूषयति। कस्मादित्यादिना ॥ आचार्य्यायेति पुनरुपादानं क्रियापदेन तस्यान्वयद्योतनार्थं विद्यायामादरो वा। उक्तमधिकारकारित्वं फलतीति भावः ॥११॥

यत एवमतिशयफलैषा ब्रह्मविद्या अतः सा प्रकारान्तरेणापि वक्तव्येति गायत्री वा इत्याद्यारभ्यते। गायत्रीद्वारेण चोच्यते ब्रह्म। सर्वविशेषरहितस्य नेति नेतीत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात्॥

सत्स्वनेकेषु छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयो-

---

गतेन ग्रन्थेनोत्तरग्रन्थस्य गतार्थत्वं परिहरति। यत इति॥ सविशेषद्वारकब्रह्मविद्यानन्तरं तद्देवतागायत्रीद्वारेण तद्विद्योपदिश्यत इत्यर्थः। ब्रह्मविद्याया विवक्षितत्वे ब्रह्मैवोपदिश्यतां किं गायत्र्युपदेशेनेत्याशङ्क्याह। गायत्रीति॥

तथापि छन्दोऽन्तराणि विहाय किमिति गायत्रीद्वारैव ब्रह्मोपदिश्यते तत्राह। सत्स्विति॥ ब्रह्मज्ञानद्वारतया तदुपायतयेत्यर्थः॥ प्राधान्ये हेतुमाह। सोमाहरणादिति॥ सोमस्याहरणमानयनम्। तत्र साधनत्वं गायत्रीच्छन्दसां ब्राह्मणानां याजकैरिष्यते। तद्युक्तं तस्या यज्ञे प्राधान्यमित्यर्थः। यद्वा देवैः सोमहरणमिच्छद्भिश्छन्दसां गायत्रीत्रिष्टुब्जगतीनां तादर्थ्येन नियोगे जगतीत्रिष्टुभौ मध्ये मार्गमशक्त्या निवृत्ते। गायत्री सोमं प्राप्य रक्षिणस्तस्य विजित्य तं देवेभ्य समाहरदिति। ऐतरेयकब्राह्मणे सोमो वै राजाऽमुष्मिंल्लोक आसीदित्यत्र प्रसिद्धमतस्तत्प्राधान्यमित्यर्थः। तत्रैव हेत्वन्तरमाह। इतरेति॥ उष्णिगनुष्टुप्प्रभृतीनीतराणि छन्दांसि तेषां पादयोऽक्षराणि सप्ताष्टादिसङ्ख्याकानि तेषामाहरणमुपादानं गायत्र्यक्षरैः पादशः षड्भिः क्रियतेऽधिकसङ्ख्याया न्यूनसङ्ख्यामन्तरेणासम्भवात्तस्मादितरेषु छन्दःसु गायत्र्या व्याप्तेश्च प्राधान्यमित्यर्थः। अथवा गायत्रीव्यतिरिक्तयोस्त्रिष्टुब्जगतीछन्दसोः सोमाहरणे उद्यतयोरशक्तयोर्मार्गमध्ये जगत्या त्यक्तानि त्रीण्यक्षराणि त्रिष्टुभा चैकमक्षरम्। ततश्चाष्टाचत्वारिंशदक्षरा जगती पञ्चचत्वारिंशदक्षरा संवृत्ता। चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रिचत्वारिंशदक्षरा संवृत्ता। तत्र

कानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशञ्च समकल्पतामापश्च तेजश्च तेषाꣳ संक्लृप्त्यै वर्षꣳ सङ्कल्पते वर्षस्य संक्लृप्त्या अन्नꣳ सङ्कल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः

---

सत्कर्म ब्राह्मणेनेदं कर्त्तव्यमस्मै फलायेति विधीयते। याप्युत्पत्तिर्ब्राह्मणेषु कर्मणो दृश्यते सापि मन्त्रेषु लब्धसत्ताकानामेव कर्मणां स्पष्टीकरणम्। न हि मन्त्राप्रकाशितं कर्म किञ्चिद्ब्राह्मणे उत्पन्नं दृश्यते। त्रयीविहितं कर्मेति प्रसिद्धं लोके। त्रयीशब्दश्चर्ग्यजुःसामसमाख्या। मन्त्रेषु कर्माणि कवयो यान्यपश्यन्निति चाथर्वणे। तस्माद्युक्तं मन्त्रेषु कर्माण्येकं भवन्तीति। तानि ह वा एतानि मनआदीनि सङ्कल्पैकायनानि सङ्कल्प एकोऽयनं गमनं प्रलयो येषां तानि सङ्कल्पैकायनानि सङ्कल्पात्मकान्युत्पत्तौ सङ्कल्पे प्रतिष्ठितानि स्थितौ समक्लृपतां सङ्कल्पं कृतवत्याविव हि

---

कर्मणो दर्शनादित्याशङ्क्याह। यद्वीति॥ ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वादतिस्पष्टमन्त्रानुपलम्भोऽपि कल्प्यते मन्त्रोक्तत्वमित्यर्थः॥ एतदेव प्रपञ्चयति। यापीत्यादिना॥ एकस्यां शाखायां यत्कर्म मन्त्रेष्वनुपलब्धं तच्छाखान्तरीयं मन्त्रप्रकाशितं भविष्यति इत्यत्र हेत्वन्तरमाह। त्रयीति॥ तथापि कथं मन्त्रप्रकाशितत्वं तत्राह। त्रयीशब्दश्चेति॥ मन्त्रेषु कर्माण्यन्तर्भवन्तीत्यत्र श्रुतेरनुमतिं कथयति। मन्त्रेष्विति॥ तथापि कथं सङ्कल्पस्य भूयस्त्वमित्याशङ्क्याह। तानीति॥ अयनपर्यायत्वेनोक्तगमनस्य क्रियात्वं व्यावर्त्तयति। प्रलय इति॥ इतश्च सङ्कल्पस्याप्यस्ति महत्त्वमित्याह।

सङ्कल्पन्ते प्राणानाꣳ संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणाꣳ सङ्क्लृप्त्यै कर्म्माणि सङ्कल्पन्ते कर्म्मणाꣳ सङ्क्लृप्त्यै लोकः सङ्कल्पते लोकस्य सङ्क्लृप्त्यै सर्वꣳ सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥

---

द्यौश्च पृथिवी च द्यावापृथिवी द्यावापृथिव्यौ निश्चले लक्ष्येते। तथा समकल्पेतां वायुश्चाकाशञ्च एतावपि सङ्कल्पं कृतवन्ताविव। तथा समकल्पन्तामापश्च तेजश्च स्वेन रूपेण निश्चलानि लक्ष्यन्ते। यतस्तेषां द्यावापृथिव्यादीनां सङ्क्लृप्त्यै सङ्कल्पनिमित्तं वर्षं सङ्कल्पते समर्थो भवति। तथा वर्षस्य सङ्क्लृप्त्यै सङ्कल्पनिमित्तमन्नं सङ्कल्पते। वृष्टेर्ह्यन्नं भवत्यन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते। अन्नमया हि प्राणा अन्नोपष्टम्भका अन्नं दामेति हि श्रुतिस्तेषां सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते॥ प्राणवान् हि मन्त्रानधीते नाबलो मन्त्राणां हि सङ्क्लृप्त्यै कर्म्माण्यग्निहोत्रादीनि सङ्कल्पन्तेऽनुष्ठीयमानानि मन्त्र-

---

समकॢपतामिति॥ यतो द्यावापृथिव्यादिषु महत्स्वपि सङ्कल्पानुवृत्ति-र्दृश्यतेऽतोऽपि तस्य महत्त्वं गम्यते न केवलं कारणत्वादेवेत्यर्थः। एतच्च तस्य महत्त्वमेवमेतव्यमित्याह। तेषामिति॥ वृष्टेर्व्रीह्यादिकार्य्य-त्वात्तदीयसङ्कल्पस्य तन्निमित्तत्वोपचारात्तस्य सङ्कल्पनिमित्तत्वमित्यर्थः। वृष्टिवशादन्नं समर्थीभवतीत्यत्र प्रसिद्धिं प्रमाणयति। वृष्टेर्हीति॥ अन्ना-धीनं प्राणसामर्थ्यमित्यत्र हेतुमाह। अन्नमया हीति॥ आपोमयः प्राण इत्युक्तत्वात्कथमन्नमयत्वमित्याशङ्क्याह। अन्नोपष्टम्भका इति॥ तत्र वाजसनेयकश्रुतिं प्रमाणयति। अन्नमिति॥ प्राणानां मन्त्राध्ययनकारणत्वं

स यः सङ्कल्पं ब्रह्मेत्युपास्ते सङ्क्लृप्तान् वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथा कामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्ते

---

प्रकाशितानि समर्थीभवन्ति फलाय। ततो लोकः फलं सङ्कल्पते। कर्मकर्तृसम्बन्धितया समर्थो भवतीत्यर्थः। लोकस्य सङ्क्लृप्त्यै सर्वं जगत्सङ्कल्पते स्वरूपावैकल्याय। एतद्धीदं सर्वं जगद्यत्फलावसानं तत्सर्वं सङ्कल्पमूलम्। अतो विशिष्टः स एष सङ्कल्पः। अतः सङ्कल्पमुपास्स्वेत्युक्त्वा फलमाह। उपासकस्य। स यः सङ्कल्पं ब्रह्मेति ब्रह्मबुद्ध्योपास्ते क्लृप्तान् वै धातास्येमे लोकाः फलमिति क्लृप्तान् समर्थितान् सङ्कल्पितान्स विद्वान्ध्रुवान् नित्यान्। अत्यन्ताध्रुवापेक्षया ध्रुवश्च स्वयम्। लोकिनो ह्यध्रुवत्वे लोके ध्रुवक्लृप्तिर्व्यर्थेति ध्रुवः सन् प्रतिष्ठितानुपकरणसम्पन्नानित्यर्थः। पश्वपुत्रादिभिः

---

व्युत्पादयति। प्राणवानिति॥ ततो मन्त्रप्रकाशितकर्मवशादिति यावत्। कर्मफलवशाज्जगतः सर्वस्यावैकल्येऽपि कथं सङ्कल्पस्य महत्त्वमित्याशङ्क्याह। एतद्धीति॥ तन्महत्त्वे फलितमाह। अत इति॥ आत्मातिरिक्तानां लोकानां कथं नित्यत्वमत आह। अत्यन्तेति॥ लोकानामेवं ध्रुवत्वमुच्यतां किमिति लोकिनस्तदुच्यते तत्राह। लोकिनो हीति॥ कथमुपकरणेषु प्रतिष्ठितत्वम्? इत्याशङ्क्याह। पशुपुत्रादिभिरिति। यावत्सङ्कल्पस्येत्यादिश्रुतेः॥ विषयमङ्गोक्तं दर्शयति। आत्मन इति॥ सङ्कल्पस्य यावन्गोचरत्वमात्र कामचारो भवतीति सम्बन्धः। निरङ्कुशे सङ्कल्पस्य का हानिरित्याशङ्क्याह। उत्तरेति॥ यदि सङ्कल्पमात्रस्य गोचरे सङ्कल्पोपासकस्य काम-

ऽस्ति भगवः सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ४ ॥

चित्तं वाव संङ्कल्पाद्भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु

---

प्रतितिष्ठतीति दर्शनात्स्वयं च प्रतिष्ठित आत्मीयोपकरणसम्पन्नोऽव्यथमानानमित्रादित्रासरहितानव्यथमानश्च स्वयमभिसिद्ध्यत्यभिप्राप्नोतीत्यर्थः। यावत्सङ्कल्पस्य गतं सङ्कल्पगोचरः तत्रास्य यथा कामचारो भवति। आत्मनः सङ्कल्पस्य न तु सर्व्वेषां सङ्कल्पस्येति। उत्तरफलविरोधात्। यः सङ्कल्पं ब्रह्मेत्युपास्ते इति पूर्व्ववत्॥ ४ ॥

चित्तं वाव सङ्कल्पाद्भूयोऽस्ति। चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वं अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यञ्च तत्सङ्कल्पादपि भूयः। कथम्। यदा वै प्राप्तं वस्त्विदमेवं प्राप्तमिति चेतयते तदा दानाय वापोहाय वाऽथ सङ्कल्पयतेऽथ मनस्यतीत्यादि पूर्ववत्॥

---

चारो भवति तर्हि सर्व्वसङ्कल्पस्य विचित्रतया सर्व्वगोचरत्वसम्भवाद्याऽवच्छिन्नस्य गतिमित्यादिना वक्ष्यमाणफलं विरुध्येत नहि सङ्कल्पोपासनादेव सर्व्वस्मिन्फले सिद्धे चित्ताद्युपासनं तत्फलं वा पृथक्कथयितुमुचितम्। यतो यावत्सङ्कल्पस्येत्यादि श्रुतेरुक्तसङ्कोचो युक्त इत्यर्थः॥ ४॥

चित्तशब्दस्य मनःशब्देन पुनरुक्तिं परिहरति। चित्तं चेतयितृत्वमिति॥ तस्यात्मत्वं व्यावर्त्तयति। प्राप्तेति॥ इदं वस्त्वेवं प्राप्तमिति प्राप्तकालवस्तुनो वस्त्वनुरोधी चेतनात्मको वृत्तिविशेषस्तद्वत्त्वं चित्तमित्यर्थः। अतीतं भोजनमस्मिन्साधनं इष्टं भोजनत्वात्॥ आगामिनोऽपि

नाभीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥ तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वाऽयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥२॥ स यश्चित्तं ब्रह्मेत्यु-

---

तानि सङ्कल्पादीनि कर्मफलान्तानि चित्तैकायनानि चिदात्मानि चित्तोत्पन्नानि चित्ते प्रतिष्ठितानि चित्तस्थितान्यपि पूर्ववत्। किञ्च चित्तस्य माहात्म्यम्। यस्माच्चित्तं सङ्कल्पादिमूलं तस्माद्यद्यपि बहुविद्बहुशास्त्रादिपरिज्ञानवान् सन्नचित्तो भवति प्राप्तादिचेतयितृत्वसामर्थ्यविरहितो भवति तं निपुणा लौकिका नायमस्ति विद्यमानोऽप्यसत्सम एवेत्येनमाहुः। यच्चायं किञ्चिच्छास्त्रादि वेद श्रुतवांस्तदप्यस्य वृथैवेति कथयन्ति। कस्मात्। यद्ययं विद्वान् स्यादित्थमेवमचित्तो न स्यात्तस्मादस्य श्रुतमप्य-

---

तस्य तदेव प्रयोजनमिति निरूपणसामर्थ्यं चित्तमिति मत्विदमित्याह। अतीतेति॥ यथोक्तस्य चित्तस्य सङ्कल्पाद्भूयस्त्वम्॥ प्राप्तमपूर्वत्वं श्रुत्वादवति। कथमित्यादिना सङ्कल्पप्रकरणं परामृशति। पूर्ववदिति॥ यथा सङ्कल्पस्य निमित्तत्वे सति स्तुत्यर्थमधिकरणत्वं युक्तम्। तथा चित्तस्य विभक्तस्य सङ्कल्पादिषु निमित्तत्वेऽपि स्तुत्यर्थत्वमेव तदधिकरणत्वमाह। तानीति॥

पास्ते चित्तान् वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति या वच्चित्तस्य गतं तत्रास्य यथा कामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवी त्विति ॥ ३ ॥ ५ ॥

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायतीवापो

---

श्रुतमेवेत्याहुरित्यर्थः । अथवाऽल्पविदपि यदि चित्तवान् भवति तस्मा एतस्मै तदुक्तार्थग्रहणायैवोतापि शुश्रूषन्ते श्रोतुमिच्छन्ति । तस्माच्च चित्तं ह्येवैषां सङ्कल्पादीनामेकायनमित्यादि पूर्ववत् । चित्तानुपचित्तान् बुद्धिमद्गुणैः स चित्तोपासको ध्रुवानित्यादि चोक्तार्थः ॥ ५ ॥

ध्यानं वाव चित्ताद्भूयः । ध्यानं नाम शास्त्रोक्तदेवतादिष्वालम्बनेष्वचलो भिन्नजातीयैरनन्तरितः प्रत्ययसन्तानः ।

---

इतश्च चित्तस्यास्ति वैशिष्ट्यमित्याह । किञ्चेति । यद्यपि बहुशास्त्रार्थपरिज्ञानवान् तथापि यद्यचित्तो भवतीति योजना ॥ अचित्तस्यासत्त्वं श्रुतवैयर्थ्यञ्चेत्युक्तं प्रश्नद्वारा विवृणोति । कस्मादित्यादिना । श्रुतमपीत्यपिशब्देन सत्त्वं गृह्यते ॥ चित्ताभावे श्रुतादेर्वैयर्थ्योक्त्या तद्वैशिष्ट्यमादिष्टमिदानीं तद्वैशिष्ट्ये हेत्वन्तरमाह । अथवेति । चित्तवतोक्तार्थग्रहणार्थं श्रोतुमिच्छा लोकस्य भवतीत्यत्र हेतुमाह । तस्मादिति ॥ ५ ॥

किं तद्ध्यानमित्यपेक्षायामाह । ध्यानं नामेति ॥ अचलत्वं व्याचष्टे । भिन्नजातीयैरिति ॥ कथं तस्य चित्ताद्भूयस्त्वमित्याशङ्क्य ध्यानैकाग्रतादोषो-

ध्यायन्तीव पर्व्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांश-शा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥ स यो

---

एकाग्रतेति समाङ्कः। दृश्यते च ध्यानस्य माहात्म्यं फलतः। कथम्। यथा योगी ध्यायन्निश्चलो भवति ध्यानफललाभे। एवं ध्यायतीव निश्चला दृश्यते पृथिवी ध्यायतीवान्तरिक्षमित्यादि समानमन्यत्। देवाश्च मनुष्याश्च देवमनुष्या मनुष्या एव वा देवमनुष्याः शमादिगुणसम्पन्ना मनुष्या देवस्वरूपं न जहतीत्यर्थः। यस्मा-देवंविशिष्टं ध्यानं तस्माद्य इह लोके मनुष्याणामेव धनैर्विद्यया गुणैर्वा महत्तां महत्त्वं प्राप्नुवन्ति धनादि-महत्त्वहेतुं लभन्त इत्यर्थः। ध्यानापादांशा इव ध्यानस्या-पादानमापादो ध्यानफललाभ इत्येतत्तस्यांशोऽवयवः

---

महत्त्वस्यातीतादिफलनिरूपणेन सामर्थ्यादर्शनादेकाग्रतारूपो ध्यानपदा-र्थो वेदितव्यस्तस्य कारणात्ततो भूयानित्यभिप्रेत्याह। एकाग्रतेति॥ इतश्चास्ति तस्य भूयस्त्वमित्याह। दृश्यते चेति॥ फलद्वारा तन्माहात्म्यं प्रश्नपूर्व्वकं दृष्टान्तेन स्पष्टयति। कथमित्यादिना॥ गौरवपरिहारार्थं पक्षान्तरमाह। मनुष्या एवेति॥ मनुष्याणामेव सतां कुतो देवत्वमित्या-शङ्क्याह। शमादीति॥ ध्यानफलं नैश्चल्यं तच्चकृत्सु पृथिव्यादिषु दृष्टं तथाच तद्वैशिष्ट्यमित्यर्थः॥ मतैव हेत्वन्तरमाह। यस्मादिति॥ धना-

ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथा कामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ६ ॥

---

कला काचिद्ध्यानफललाभकलावन्त इवेत्यर्थः । ते भवन्ति निश्चला इव लक्ष्यन्ते न क्षुद्रा इव । अथ ये पुनरल्पाः क्षुद्राः किञ्चिदपि धनादिमहत्त्वैकदेशमप्राप्तास्ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासका उपवादिनः परदोषं सामीप्ये युक्तमेव वदितुं शीलं येषां ते उपवादिनश्च भवन्ति । अथ ये महत्त्वं प्राप्ता धनादिनिमित्तं तेऽन्यान् प्रति भवन्तीति प्रभवो विद्याचार्य्यराज्येश्वरादयो ध्यानापादांशा इवेत्याद्युक्तार्थम् । अतो दृश्यते ध्यानस्य महत्त्वं फलतो भूयस्त्वादतस्तदुपास्स्वेत्याद्युक्तार्थम् ॥ ६ ॥

---

दिभिर्महत्त्वे हेतुत्वमुक्तं कर्मेति यावद्ध्यानस्यापादनमनुष्ठानं तेन तत्फललाभो लभ्यते तदंशो येषामस्ति ते तथा ध्यानफललाभकलावत्त्वमेव स्फुटयन्ति । निश्चला इति ॥ एवकारार्थमाह ।नेति ॥ महत्सु पुरुषेषु ध्यानफलानुवृत्तिर्दृष्टेत्यन्वयमुक्त्वा व्यतिरेकमाह । अथेति ॥ व्यतिरेकं दर्शयित्वाऽन्वयमुपसंहरति । अथ ये महत्त्वमिति॥ महत्सु नैश्चल्यदर्शनमतःशब्दार्थः ॥ महत्त्वफलमाह । अत इति ॥ ६ ॥

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु च हृदयज्ञञ्चाहृदयज्ञञ्चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥१॥

---

विज्ञानं वाव ध्यानाद्भूयः। विज्ञानं शास्त्रार्थविषयं ज्ञानं ध्यानं तस्य च कारणत्वाद्ध्यानाद्भूयस्त्वम्। कथं च तस्य भूयस्त्वमित्याह। विज्ञानेन वै ऋग्वेदं विजानाति अयमृग्वेद इति प्रमाणतया यस्यार्थज्ञानं ध्यानकारणम्। तथा यजुर्वेदमित्यादि। किञ्च पश्वादींश्च धर्माधर्मौ शास्त्रसिद्धौ साध्वसाधुनी लोकतः स्मार्त्तौ वा दृष्टविषयञ्च सर्व्वं विज्ञानेनैव विजानातीत्यर्थः। तस्माद्युक्तं ध्यानाद्वि-

---

विज्ञानस्योक्तभूयस्त्वं प्रश्नपूर्व्वकं दर्शयति। कथमित्यादिना॥ यद्यपि प्रमाणतया तज्ज्ञानं शास्त्रार्थज्ञानपूर्व्वकं तथापि कथं तस्य भूयस्त्वं तत्राह। यस्येति॥ इतश्च तस्य ध्यानाद्भूयस्त्वमित्याह। किञ्चेति॥ भूयस्त्वफलमाह॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथा कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ७ ॥

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति

---

ज्ञानस्य भूयस्त्वम्। अतो विज्ञानमुपास्वेति। शृणूपासनफलं विज्ञानवतः। विज्ञानं येषु लोकेषु तान्विज्ञानवतो लोकाञ्ज्ञानवतश्चाभिसिध्यति प्राप्नोति विज्ञानं शास्त्रार्थविषयं ज्ञानमन्यविषयनैपुण्यं तद्वद्भिर्युक्तान् लोकान् प्राप्नोतीत्यर्थः। यावद्विज्ञानस्येत्यादि पूर्ववत् ॥ ७ ॥

बलं वाव विज्ञानाद्भूयः। बलमित्यन्नोपयोगजनितं मनसो विज्ञेये प्रतिभानसामर्थ्यम्। अनश्नन्नाहृगादीनि न वै मा प्रतिभान्ति भो इतिश्रुतेः। शरीरेऽपि तदेवोत्थानादिसामर्थ्यं विज्ञानवतां शतमप्येकः प्राणी बलवाना-

---

ज्ञात इति॥ विज्ञानवद्द्योरर्थभेदं कथयति। विज्ञानमिति॥ तथापि लोकानामचेतनानां [illegible] । तद्वद्भिरिति ॥ ७ ॥

यथोक्ते बलशब्दार्थे [illegible] प्रमाणयति। अनश्नन्नादिति॥

कथं तर्हि शरीरसामर्थ्ये बलशब्दप्रयोगस्तत्राह। शरीरेऽपीति॥ तदेवेत्य-

परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बले-नान्तरिक्षं बलेन द्यौर्बलेन पर्व्वता बलेन देवम-नुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्ति-ष्ठति बलमुपास्स्वेति ॥ १ ॥ स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथा कामचारो भवति

---

कम्पयते यथा हस्ती। यतो मनुष्याणां शतं समुदितमपि। यस्मादेवमन्नाद्युपयोगनिमित्तं बलं तस्मात्स पुरुषो यदा बली बलेन तद्वान् भवत्यथोत्थातोत्थानस्य कर्त्तोत्तिष्ठंश्च गुरूणामाचार्यस्य च परिचरिता परिचरणस्य शुश्रूषायाः कर्त्ता भवति परिचरन्नुपसत्ता तेषां समीपगोऽन्तरङ्गः प्रियो भवतीत्यर्थः। उपसीदंश्च सामीप्यं गच्छंश्चैकाग्रत-याऽऽचार्यस्यान्यस्य चोपदेष्टुर्गुरोर्द्रष्टा भवतीत्यर्थः। तत-स्तदुक्तस्य श्रोता भवति। तत इदमेभिरुक्तमेवमुपपद्यते इत्युपपत्तितो मन्ता भवति मन्वानश्च बोद्धा भवति।

---

भोगोपयोगजनितमेवेत्यर्थः। न केवलं कारणत्वादेव बलं विज्ञानाद्भूयस्त्वम्। किन्तु शतस्य तस्य एको भूयस्त्वमित्याह। विज्ञानवतामिति॥ तस्मादुक्तस्य विज्ञानाद्भूयस्त्वमिति शेषः। बहुदितमपि कम्पयते तथाप्यस्मापि दृष्ट-मिति सम्बन्धः। यस्मादेवं तस्य कारणत्वं विज्ञानस्य च कार्यत्वं

यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ८ ॥

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्त्ताऽविज्ञाता भवत्यथाऽन्नस्याये द्रष्टा भवति

---

एवमेवेदमिति। तत एवं निश्चित्य तदुक्तार्थस्य कर्त्ताऽनुष्ठाता भवति विज्ञाताऽनुष्ठानफलस्यानुभविता भवतीत्यर्थः। किञ्च बलस्य माहात्म्यं बलेन वै पृथिवी तिष्ठतीत्याद्युक्तार्थम् ॥ ८ ॥

अन्नं वाव बलाद्भूयः। बलहेतुत्वात्। कथमन्नस्य बलहेतुत्वमित्युच्यते। यस्माद्बलकारणमन्नं तस्माद्यद्यपि कश्चिद्दश रात्रीर्नाश्नीयात्सोऽन्नोपयोगनिमित्तस्य बलस्य हान्या म्रियते नचेन्म्रियते यद्यु ह जीवेत्। दृश्यन्ते हि मासमप्यनश्नन्तो जीवन्तोऽथवा स जीवन्नप्यद्रष्टा भवति गुरोरपि तत एवाश्रोतेत्यादि पूर्वविपरीतं सर्वं भवति। अथ यदा बहून्यहान्यनशितो दर्शनादिक्रियास्वसमर्थः सन्नन्नस्यायी

---

तस्मात्ततस्तद्भूयस्त्वमित्येतस्मिन्नर्थे कार्यकारणभावमेतयोरुपपादयति। यस्मादित्यादिना॥ इतश्च बलस्य भूयस्त्वमेष्टव्यमित्याह। किञ्चेति ॥ ८ ॥

अथवा यदि सोऽभुञ्जानोऽपि कथञ्चिज्जीवेत्तदा जीवन्नपि सोऽद्रष्टेति सम्बन्धः॥ कथमशनमन्तरेणास्य जीवनमित्याशङ्क्याह। दृश्यन्त इति॥ अन्नोपयोगाभावे बलहानिरिति व्यतिरेकमुक्त्वा तदुपयोगे बलं भवतीत्यन्वयं व्याचष्टे। अथेति॥ अथान्नस्यायैरित्यपि पाठोऽस्ति तत्रान्नस्याय

श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥ स यो-ऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतो-ऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथा काम-चारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवो-ऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ९ ॥

---

आगमनमायोऽन्नस्य प्राप्तिरित्यर्थः सा यस्य विद्यते सोऽन्नस्यायी । आय इत्येतद्वर्णव्यत्ययेनेकारस्य व्यत्ययेन ईकारान्तत्वेन । अथान्नस्यायै इत्यपिपाठे एवमेवाप्नोत्येव-मेवार्थस्तत्र हेतुमाह । आयै इत्येदिति । ऐकारस्य वर्णस्य व्यत्ययेन ईकारान्तत्वेनैवेत्यर्थः । इत्येतद्वर्णव्यत्य-येन अथान्नस्यायै इत्यपि पाठे एवमेवार्थः । दृष्टत्वादि-कार्य्यश्रवणात् ॥ दृश्यते ह्यन्नोपयोगे दर्शनादिसामर्थ्यं न तदप्राप्तावतोऽन्नमुपास्स्वेति ॥ फलं चान्नवतः प्रभूतान्नान्वै स लोकान् पानवतः प्रभूतोदकांश्चान्नपानयोर्नित्यसम्बन्धा-ल्लोकानभिसिध्यति । समानमन्यत् ॥ ९ ॥

---

इत्येतदेव पदमन्नस्य प्राप्तिपरतया व्याख्येयमेकारमीकारत्वेन विपरिणम्य इण्प्रत्ययात्कीकारादित्याह । आय इत्येतदिति ॥ दृष्टा श्रोतेत्याद्यन्न-कार्यस्य श्रवणादपि पाठान्तरमन्नप्राप्तिपरतया व्याख्येयमित्याह । दृष्टे-त्यादीति ॥ कथं तदन्नकार्यमित्याशङ्क्यान्वयव्यतिरेकौ दर्शयति । दृश्यते हीति ॥ ९ ॥

आपो वा अन्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्त्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्व्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्त्ता अप उपास्स्वेति ॥ १ ॥ स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्व्वान् कामाꣳस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथा कामचारो भवति योऽपो ब्रह्मेत्यु-

आपो वाऽन्नाद्भूयसोऽन्नकारणत्वात्। यस्मादेवं तस्माद्यदा यस्मिन् काले सुवृष्टिः शस्यहिता शोभना वृष्टिर्न भवति तदा व्याधीयन्ते प्राणा दुःखिनो भवन्ति। किन्निमित्तमित्याहान्नमस्मिन् संवत्सरे नः कनीयोऽल्पतरं भविष्यतीति। अथ पुनर्यदा सुवृष्टिर्भवति तदाऽऽनन्दिनः सुखिनो हृष्टप्राणाः प्राणिनो भवन्त्यन्नं बहु प्रभूतं भविष्यतीति॥ अपामन्नवत्त्वान्मूर्त्तसंस्थानाश्चाप एवेमा मूर्त्तामूर्त्तभेदाकारपरिणता इति मूर्त्ता येयं पृथिवी यदन्तरिक्षम्। इत्याद्याप एवेमा मूर्त्ता अतोऽप उपास्स्वेति फलम्। स यो

अपां कारणत्वेनान्नाद्भूयस्त्वमन्वयव्यतिरेकाभ्यां साधयति। यस्मादित्यादिना। अपां सर्व्वंजगदात्मकत्वाच्चान्नाद्भूयस्त्वमुचितमित्याह। अप्सु मूर्त्तत्वादिति॥ दधिपयःप्रभृत्याकृतिपरिणामत्वादन्तरिक्षादेरप्स-

पास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयो ऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १० ॥

तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमुपगृह्या-काशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्व्वं दर्शयित्वा ऽथापः सृजते तदेतदूर्द्ध्वाभिश्च तिरश्चीभिश्च विद्यु-द्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्व्वं दर्शयि-

---

ऽपो ब्रह्मेत्युपास्ते आप्नोति स सर्व्वान् काम्यान्मूर्त्तिमतो विषयानित्यर्थः। अप्सु अन्नत्वाच्च तृप्तेरबुपासनात्तृप्तिमांश्च भवति। समानमन्यत् ॥ १० ॥

तेऽजो वाऽद्भ्यो भूयः। तेजसोऽप्कारणत्वात्। कथमप्-कारणत्वमित्याह। यस्मादब्योनिस्तेजस्तस्मात्तद्वा एतत्तेजो वायुमात्मनावष्टभ्य स्वात्मना निश्चलीकृत्य वायुमाकाश-मभिव्याप्नुवत्तपति यदा तदाहुर्लौकिका निशोचति सन्तपति सामान्येन जगन्ति तपति देहानतो वर्षिष्यति वै इति। प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्य्यं भविष्यतीति विज्ञानम् ॥ तेज एव तत्पूर्व्वमात्मान-

---

इत्यमवसेयम्। अपां सर्व्वमूर्त्तात्मकत्वमुपसंहरति। इत्यादीति ॥ १० ॥

इतिशब्दस्तदाऽऽहुरनेन सम्बध्यते ॥ वैयर्थ्याद्यं दर्शयति। प्रसिद्ध-मिति ॥ अप्तेजसोरुक्तं कार्य्यकारणत्वं उपजीव्य फलितमाह। तेज-एवेति ॥ अप्तेजसोर्विधान्तरेण कार्य्यकारणभावं दर्शयति। विद्युद्भिरिति॥

त्वाऽथापः सृजते तेज उपास्स्वेति ॥१॥ स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथा कामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ११ ॥

---

मुद्भूतं दर्शयित्वाऽथानन्तरमपः सृजतेऽतोऽप्स्रष्टृत्वाद्भूयोऽद्भ्यस्तेजः किञ्चान्यत्तदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति। कथं ऊर्ध्वाभिश्चोर्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च सहाह्लादाः स्तनयनशब्दाश्चरन्ति। तस्मात्तद्दर्शनादाहुर्लौकिका विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थमतस्तेज उपास्स्वेति। तस्य तेजस उपासनफलं तेजस्वी वै भवति। तेजोवत एव च लोकान् भास्वतः प्रकाशवतोऽपहततमस्कान् बाह्याध्यात्मिकाज्ञानाद्यपहततमस्कान् अपनीतबाह्याध्यात्मिकादितमस्कानभिसिध्यति। ऋज्वर्थमन्यत् ॥ ११ ॥

---

तदेवोपपादयति । अद्भिरिति ॥ तेजस्वी भूयस्त्वफलमाह । तेज इति ॥ तमःशब्दार्थमाह । बाह्येति ॥ बाह्यन्तमः शार्वरं आध्यात्मिकमज्ञानरागादि तदुभयमपहततमस्कानित्यत्र तमःशब्दितमित्यर्थः । अपहतशब्दार्थमाह । अपनीतेति ॥ ११ ॥

आकाशो वाव तेजसो भूयानाकाशे वै सूर्या-
चन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वय-
त्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे
रमत आकाशे न रमत आकाशे जायत आका-
शमभिजायत आकाशमुपास्स्वेति ॥ १ ॥ स य
आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्
प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिध्यति या-

---

आकाशो वाव तेजसो भूयान् । वायुसहितस्य तेजसः कारणत्वाद्योऽसौ वायुमाश्रित्येति तेजसा सहोक्तो वायुरिति पृथगिह नोक्तस्तेजसः कारणं हि लोके कार्याद्भूयो दृष्टम् । यथा घटादिभ्यो मृत्तथाकाशो वायुसहितस्य तेजसः कारणमिति ततोऽपि भूयान् । कथमाकाशे वै सूर्याचन्द्रमसावुभौ तेजोरूपौ विद्युन्नक्षत्राण्यग्निश्च तेजोरूपाण्याकाशेऽन्तः । यच्च यस्यान्तर्वर्त्ति तदल्पं भूय इतरत् । किञ्चाकाशेनाह्वयति चान्यमन्य आहूतश्चेतर आकाशेन शृणोत्यन्योक्तं शब्दमन्यः प्रतिशृणोति आकाशे रमते क्रीडत्यन्योन्यं सर्वस्तथा न रमते चाकाशे बन्ध्वादिवियोगे आकाशे जायते न मूर्त्तेनावष्टब्धे । तथाकाशमभिल-

---

वायोः प्रकाशादाकाशो भूयानिति वक्तव्ये कथं तेजसो भूयानित्युक्तमत आह । वायुरिति ॥ कारणत्वेऽपि कथमाकाशस्य वायुसहितात्तेजसो भूयस्त्वमित्याशङ्क्याह । कारणं हीति ॥ तेजसो वायुसहितादाकाशस्य भूयस्त्वं प्रश्नपूर्वकं प्रकारान्तरेण दर्शयति । कथमित्यादिना ॥ इतश्चाकाशस्यास्ति भूयस्त्वमित्याह । किञ्चेति ॥ तद्भूयस्त्वफलमाह । स य

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रा-
नधीते कर्म्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत
इमञ्च लोकममुञ्चेच्छत आशामुपास्स्वेति ॥ १ ॥ स
य आशां ब्रह्मेत्युपास्ते आशयाऽस्य सर्व्वे कामाः
समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदा-
शाया गतं तत्रास्य यथा कामचारो भवति य
आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय
इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्
ब्रवीत्विति ॥ २ ॥ १४ ॥

---

आशा वाव स्मराद्भूयसी । अप्राप्तवस्त्वाकाङ्क्षा आशा तृष्णा काम इति यामाहुः पर्य्यायैः सा च स्मरात् भूयसी । कथमाशया ह्यन्तःकरणस्थया स्मरति स्मर्त्तव्यं आशा-विषयरूपं स्मरन्नसौ स्मरो भवत्यत आशेद्धः आशयाभि-वर्द्धितः स्मरभूतः स्मरन्नृगादीन्मन्त्रानधीतेऽधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्म्माणि कुरुते तत्फला-शयैव पुत्रांश्च पशूंश्च कर्म्मफलभूतानिच्छतेऽभिवाञ्छति आशयैव तत्साधनान्यनुतिष्ठन् इमञ्च लोकमाशेद्ध एव स्मरन् लोकसङ्ग्रहहेतुभिरिच्छत्यमुञ्च लोकमाशेद्धः स्मरन् । तत्साधनानुष्ठानेनेच्छते आशारसनाबद्धं स्मराकाशा-दिनामपर्य्यन्तं जगच्चक्रीभूतं प्रतिप्राणि यत आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व ॥ यस्त्वाशां ब्रह्मे-त्युपास्ते शृणु तस्य फलमाशया सदोपासितयास्योपास-

प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वँ समर्पितं

---

कस्य सर्व्वे कामाः समृध्यन्ति समृद्धिं गच्छन्त्यमोघा ह्यस्याशिषः प्रार्थनाः सर्व्वा भवन्ति यत्प्रार्थितं सर्व्वं तदवश्यं भवतीत्यर्थः । यावदाशाया गतमित्यादि पूर्व्ववत् ॥ १४ ॥

नामोपक्रममाशान्तं कार्य्यकारणत्वेन निमित्तनैमित्तिकत्वेन चोत्तरोत्तरभूयस्तयाऽवस्थितं स्मृतिनिमित्तसद्भावमाशारशनापाशैर्विपाशितं सर्वं सर्व्वतो विसमिव तन्तुभिर्यस्मिन् प्राणे समर्पितम् । येन च सर्व्वतो व्यापिना अन्तर्वहिर्गतेन सूत्रे मणिगणा इव सूत्रेण ग्रथितं विधृतञ्च । स एष प्राणो वै आशाया भूयान् । कथमस्य भूयस्त्वमित्याह दृष्टान्तेन समर्थयंस्तद्भूयस्त्वं यथा वै लोके रथचक्रस्यारा रथनाभौ समर्पिताः सम्प्रोताः सम्प्रवेशिता इत्येतत् । एवमस्मिन् लिङ्गसङ्घातरूपे प्राणे प्रज्ञा-

---

आशाया भूयस्त्वमाकाङ्क्षाद्वारा उत्थापयति। कथमित्या-दिना ॥ १४ ॥

प्राणस्य सर्व्वास्पदत्वेन भूयस्त्वं कथयति। नामोपक्रममिति॥ [illegible] यस्य वक्तोऽस्ति तत्तथा पाठक्रमेणाशि[illegible] [illegible] तथेति विभक्तः। कार्य्यकारणत्वं [illegible] [illegible] निमित्तनैमित्तिकत्वमपि [illegible] [illegible] पूर्व्वस्मात्पूर्व्वस्मात् [illegible] [illegible] वाक्यम्॥ स्मृति-निमित्तः सद्भावो यस्य तत्तथा। [illegible] सर्व्वतो विपाशित-

प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य्यः प्राणो ब्राह्मणः ॥१॥ स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं

---

त्मनि दैहिके मुख्ये यस्मिन् परा देवता नामरूपव्याकरणायाऽऽदर्शादौ प्रतिबिम्बवज्जीवेनात्मनानुप्रविष्टा । यश्च महाराजस्येव सर्व्वाधिकारीश्वरस्य। कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुतेः। यस्तु छायेवानुगत ईश्वरम्। तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः। स एव प्राण एव प्रज्ञात्मेति कौषीतकीनाम्। अत एवमस्मिन् प्राणे सर्व्वं यथोक्तं समर्पितम्। अतः स एष

---

मित्यत्र दृष्टान्तमाह । विसमिवेति ॥ विसशब्दो मृणालविषयः । यथोक्तं जगद्यस्मिन्नर्पितं स एष भूयानिति सम्बन्धः । सर्व्वस्य जगतः ॥ तस्मिन्नर्पितत्वमेव दृष्टान्तद्वारा स्पष्टयति । येन चेति ॥ सर्व्वतो व्यापिनेत्यस्यैव स्फुटीकरणमन्तर्वहिर्गतेनेति प्राणस्याशायाः सकाशाद्भूयस्त्वमाकाङ्क्षापूर्व्वकं समर्थयते । कथमित्यादिना ॥ लिङ्गानां व्यष्टीनां सङ्घातः समुदायस्तद्रूपे समष्ट्यात्मनीति यावत् ॥ उपाधितद्वतोरैक्यमभिप्रेत्य विशिनष्टि । प्रज्ञात्मनीति ॥ तस्यैवाध्यात्ममधिदैवञ्चावस्थानं सूचयति । दैहिकमिति ॥ प्राणान्तरं व्यावर्त्तयति । मुख्य इति ॥ यथोक्तेऽस्मिन् प्राणे सर्व्वं समर्पितमित्युत्तरत्र सम्बन्धः ॥ प्रज्ञात्मनीति परमात्मोपाधित्वं प्राणस्योक्तं तदुपपादयति । यस्मिन्निति ॥ तस्मिन् सर्व्वं समर्पितमिति

वाचार्य्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वम

---

प्राणोऽपरतन्त्रः प्राणेन स्वशक्त्यैव याति नान्यकृतगमनादिक्रियास्तस्य सामर्थ्यमित्यर्थः । सर्व्वं क्रियाकारकफलभेदजातं प्राण एव न प्राणाद्बहिर्भूतमस्तीति प्रकरणार्थः । प्राणः प्राणं ददाति । यद्ददाति तत्स्वात्मभूतमेव । यस्मै ददाति तदपि प्राणायैव । अतः पित्राद्याख्योऽपि प्राण एव । कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमिति । उच्यते । सति प्राणे पित्रादिशब्दप्रयोगात्तदुत्क्रान्तौ च प्रयोगाभावात् कथं तदित्याह । स यः कश्चित्पित्रादीनामन्यतमं यदि तं भृशमिव तद-

---

पूर्व्ववत्सम्बन्धः । किमिति चक्षुरादिषु विद्यमानेषु मुख्यस्यैव प्राणस्य परमात्मोपाधिकत्वमुपगतमित्याशङ्क्याह । यथेति ॥ प्राणस्येश्वरं प्रति सर्व्वाधिकारत्वे श्रुत्यन्तरं प्रमाणयति । कश्चिदिति ॥ ईश्वरं प्रति प्राणस्यैवौपाधिकत्वे हेत्वन्तरमाह । यश्चेति ॥ अत्रापि पूर्व्ववदन्वयः ॥ प्राणच्छायावदीश्वरमनुगच्छतीत्यत्र श्रुत्यन्तरं प्रमाणयति । तद्यथेति ॥ भूतमात्राः शब्दादयः पृथिव्यादयश्च विषया प्रज्ञामात्राश्च शब्दादिबुद्धिषु तज्जनकेन्द्रियेषु चेत्यर्थः । भवतु तासां प्राणेऽर्पितत्वं तथापि कथं प्राणस्य छायावदीश्वरं प्रत्यनुगतिस्तत्राह । स एष इति ॥ कौषीतकीनां श्रुतिरिति शेषः । प्राणस्य पूर्वोक्तविशेषणवैशिष्ट्यमतःशब्दार्थः ॥ व्याख्यातं भागमनूद्यावशिष्टमंशं व्याकरोति । एवमिति ॥ प्राणः प्राणेन यातीत्यस्यार्थमाह । अत इति ॥ सर्व्वात्मकत्वादिति यावत् ॥ प्राणः प्राणेन यातीत्यादेः प्राणो ह्येवैतानि सर्व्वाणि भूतानीत्यन्तस्य तात्पर्य्यं संक्षिप्य

स्वाचार्य्यहा वै त्वमसि ब्राह्मणहा वै त्वमसि ॥२॥ अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यति-षन्दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न

---

अननुरूपमिव किञ्चिद्वचनं त्वंकारादियुक्तं ब्रूयात् तदैनं पार्श्वस्था आहुर्विवेकिनो धिक्त्वास्तु धिगस्तु त्वामित्येवम् ॥ पितृहा वै त्वं पितुर्हन्तेत्यादि । अथैनानेवोत्क्रान्तप्राणां-स्त्यक्तदेहान् यथान्यदपि शूलेन समासं समस्य व्यतिषन्द-हेद्व्यत्यस्य सन्दहेदेवमतिक्रूरमपि कर्म्म समासव्यत्यासा-दिप्रकारेण दहनलक्षणं तद्देहसम्बद्धमेव कुर्व्वाणं नैवैनं ब्रूयुः पितृहेत्यादि । तस्मादन्वयव्यतिरेकाभ्यामवगम्यते एतत्पित्राद्याख्योऽपि प्राण एवेति । तस्मात्प्राणो ह्येवैतानि पित्रादीनि सर्व्वाणि भवन्ति चलानि स्थिराणि च । स वा

---

कथयति । कथमिति ॥ दातुर्देयस्य सम्प्रदानस्य च प्राणाभिन्नत्वं प्रकटयति ॥ प्राण इति ॥ तदपीति दीयमानमुच्यते । स्वस्य सम्प्रदानस्य च प्राणाभिन्नत्वात्प्राणायैवेत्युक्तं प्राणस्य सर्व्वात्मत्वमतःशब्दार्थः । प्रविविक्तगति-क्रमणायेति गृह्यते । कथमिति ॥ अन्वयव्यतिरेकाभ्यां पित्रादिशब्दानां प्राणविषयत्वाच्च प्रविवेककृतमित्याह । उच्यत इति ॥ अन्वयव्यतिरे-कावेव प्रश्नपूर्व्वकं प्रकटयति । कथमित्यादिना ॥ पित्रादिषु प्राणे सति पित्रादिशब्दानां प्रयुज्यमानत्वमन्यथा चाप्रयुज्यमानत्वं तदिदमुच्यते । त्वंकारादियुक्तमित्यादिपदेन तिरस्कारप्रभेदो गृह्यते ॥ पित्रादिष्व-प्रियवादिनं प्रति विवेकिनां धिक्कारवचने हेतुमाह । पितृहेति ॥ सति प्राणे पित्रादिषु पित्रादिशब्दानां प्रयुज्यमानत्वमित्यन्वयमुक्त्वा व्यति-रेकमाह । अथैनानेवेति ॥ समस्य पुञ्जीकृत्य व्यत्यस्यावयवान्विभज्य

भ्रातृहासीति न स्वसृहासीति नाचार्य्यहासीति न ब्राह्मणहासीति ॥ ३ ॥ प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं

---

एव प्राणवित् । एवं यथोक्तप्रकारेण पश्यन् फलतोऽनुभवन्नेवं मन्वान उपपत्तिभिश्चिन्तयन्नेवं विजानन्नुपपत्तिभिः संयोज्यैवमेवेति निश्चयं कुर्व्वन्नित्यर्थः । मनन-विज्ञानाभ्यां हि सम्भूतः शास्त्रार्थो निश्चितो दृष्टो भवेत् अत एवं पश्यन्नतिवादी भवति । नामाद्याशान्तमतीत्य वदनशीलो भवतीत्यर्थः । ते चेद्ब्रूयुस्तं यदि एवमतिवा-दिनं सर्व्वदा सर्व्वैः शब्दैर्नामाद्याशान्तमतीत्य वर्त्तमानं प्राणमेव वदन्ति एवं पश्यन्तमतिवदनशीलमतिवादिनं ब्रह्मादिस्तम्बपर्य्यन्तम् । तस्य हि जगतः प्राण आत्माऽह-

---

इत्यर्थः । यद्यपीत्युपक्रमादेवमपीत्येतत्तथापीत्यस्मिन्नर्थे द्रष्टव्यम् । तदेवाति-क्रूरं कर्म्म विशिनष्टि । शूलेनेति ॥ अवयवविभञ्जनमादिशब्दार्थः । तद्देहदहनमित्यत्र तच्छब्दः क्रूरपित्रादिविषयः । यद्यपि त्यक्तप्राणेष्वपि-देहेषु पित्रादिशब्दो दृष्टस्तथापि नासौ मुख्यः । तद्विषये क्रूरकर्म्मानु-ष्ठानेऽपि शिष्टमहोऽदृष्टेरिति भावः ॥ उक्तान्वयव्यतिरेकफलमुपसंहरति । तस्मादिति ॥ प्राणस्यैव पित्रादिशब्दप्रकृतत्वे किं स्यादित्याशङ्क्याह । तस्मात्प्राणो हीति ॥ प्राणस्य भूयस्त्वमित्थं व्युत्पाद्य तद्विज्ञानफलमाह । स वा इति ॥ प्राणविदतिवादी भवतीति सम्बन्धः ॥ कथं प्राणवित्त्वमि-त्यपेक्षायामाह । एवमिति । सर्व्वात्मत्वं यथोक्तप्रकारः फलतोऽनुभवः साक्षात्त्वेन साक्षात्कारः ॥ तदनुदर्शनेनैव प्राणवित्त्वे सिद्धे सति किमिति मननविज्ञाने पृथगुपन्यस्येते तत्राह । मननविज्ञानाभ्यां हीति ॥ उक्तान्वयव्यतिरेकाभ्यामुपपत्तिभिश्च ज्ञातानामुपास्यार्थविषयं प्रायं ज्ञानं

विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसी-
त्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥ १५ ॥

एष तु अतिवदति यः सत्येनातिवदति
सोऽहं भगवः सत्येनातिवदानीति सत्यन्त्वेव

---

मिति ब्रुवाणं यदि ब्रूयुरतिवाद्यसीति। बाढमतिवाद्यस्मीति ब्रूयात् नापह्नुवीत। कस्माद्ध्यसावपह्नुवीत। यत्प्राणं सर्वेश्वरमयमस्मीत्यात्मत्वेनोपगतः॥ १५॥

स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं श्रुत्वा नातःपरमस्तीत्युपरराम। न पूर्ववत्किमस्ति भगवः प्राणाद्भूय इति पप्रच्छ। यतस्तमेवं विकारानृतब्रह्मविज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमात्मानं मन्यमानं योग्यं शिष्यमिथ्याग्रहविशेषाद्विप्रच्यावयन्नाह भगवान्सनत्कुमारः। एष तु वा अतिवदति यमहं वक्ष्यामि न प्राणविदतिवादी परमार्थतः। नामा-

---

तदत्र विज्ञानं विवक्ष्यते। तत्फलसाक्षात्करणं दर्शनमिति भेदः। मननविज्ञाने विना दर्शनासम्भवोऽतःशब्दार्थः। एवं मननादिद्वारेणेति यावत्॥ अतिवादित्वं व्युत्पादयति। नामादीति॥ नापह्नुवीतेत्युक्तं व्यक्तीकरोति। कस्मादिति॥ १५॥

यद्यस्मादयं विज्ञानात्मत्वेन सर्वेश्वरं प्राणोऽस्मीत्युपगतवांस्तस्मादपह्नवे हेत्वभावादात्मनोऽतिवादित्वम्॥ नापह्नुवीतेत्यत्र प्राणान्तमुपदेशं श्रुत्वा नारदस्य तूष्णींभावे किं कारणमित्याशङ्क्याह। स एष इति॥ कथं तस्योपरतिरवगतेत्याशङ्क्याह। न पूर्ववदिति॥ किमिति तर्हि प्राणान्तायामुपेक्षायां स्वयमेवाचार्यो व्युत्पादयतीत्याशङ्क्याह। तमेवमिति॥

विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥ १६ ॥

यदा वै विजानात्यथ सत्यं वदति नाविजा-

---

द्यपेक्षन्त्, तस्यातिवादित्वम् । यस्तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परमार्थसत्यं वेद सोऽतिवादीत्यत आह । एष तु वा ऽतिवदति यः सत्येन परमार्थसत्यं विज्ञानवत्तयाऽति-वदति सोऽहं त्वां प्रपन्नो भगवन्सत्येनातिवदानि । तथा मां नियुनक्तु भगवान् यथाहं सत्येनातिवदानीत्यभिप्रायः । यद्येवं सत्येनातिवदितुमिच्छसि सत्यमेव तु तावद्विजिज्ञा-सितव्यमित्यत आह नारदः । तथास्तु तर्हि सत्यं भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छन्भवतोऽर्हमिति ॥ १६ ॥

यदा वै सत्यं परमार्थतो विजानाति । इदं पर-मार्थतः सत्यमिति ततोऽनृतं विकारजातं वाचारम्भणं

---

एतस्माज्जायते प्राण इति श्रुत्यन्तराद्धाणस्य विकारत्वेनानृतत्वम् ॥ वाचा-रम्भणं विकारो नामधेयमित्युक्तम् । तस्मिन्नन्ते प्राणे ब्रह्मापि विज्ञानं तेनेति यावत् ॥ परिहृतत्वे कथमनृतार्हत्वमित्याशङ्क्य मिथ्याज्ञानवा-सितवादित्वाद । परमार्थेति ॥ न च तत्रोमेत्यार्हत्वमित्याह । योऽयमिति॥ मिथ्याग्रहविशेषो नास्ति प्राणात्परमित्यभिमानः ॥ कथं तर्हि प्राणविदो ऽतिवादित्वमुक्तं तत्राह । नामादीति ॥ कस्तर्हि परमार्थतो ऽतिवादी-त्याशङ्क्याह । यस्त्विति ॥ सोऽतिवादीति ॥ अतः सनत्कुमारस्याभि-प्रायोऽत एवाहेति योजना ॥ ननु नारदस्य नाद्यापि सत्यविज्ञानस-त्वज्ञं कथं सत्येनातिवदानीति पृच्छति तत्राह । तथेति ॥ १६ ॥

यदा वै विजानातीत्यादिवाक्यं व्याकुर्वन्नुत्तरमाह । वदेति ॥ यदि विषं सद्रूपादनृतमनाह्निग्नमसदेव स्याद्यदि त्वमिवं सत्यात्मैव

ननु सत्यं वदति विजानन्नेव सत्यं वदति विज्ञा-

हित्वा सर्वविकारावस्थं सदेवैकं सत्यमिति तदेवाभि वदति यद्वदति। ननु विकारोऽपि सत्यमेव। नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः प्राणा वै सत्यं तेषामेष सत्यमिति श्रुत्यन्तरात्। सत्यमुक्तं सत्यत्वं श्रुत्यन्तरे विकारस्य न तु परमार्थापेक्षमुक्तं किन्तर्हीन्द्रियविषयाविषयत्वापेक्षं सच्च त्यच्चेति सत्यमित्युक्तं तद्द्वारेण च परमार्थसत्यस्योपलब्धिर्विवक्षितेति। प्राणा वै सत्यं तेषामेष सत्यमिति चोक्तम्। इहापि तदिष्टमेव। इह तु प्राणविषयात्परमार्थसत्यविज्ञानाभिमानाद्व्युत्थाप्य नारदं यत्सदेव सत्यं परमार्थतो भूमाख्यं तद्विज्ञापयिष्यामीत्येष विशेषतो विवक्षितोऽर्थः। नाविजानन्सत्यं वदति॥ यस्त्वविजानन्वदति सोऽग्न्यादिशब्देनाग्न्यादीन् परमार्थसद्रूपान्मन्यमानो

---

परमार्थसत्यं सिद्धेदिति परमार्थतः सत्यं यदेव विजानातीत्यर्थः॥ विज्ञानप्रकारमभिनयति। इदमिति॥ ततश्चाऽनृतं विकारजातं हित्वा सदेव सत्यमिति ज्ञात्वा यद्वदति तत्सदेव वदतीति योजना॥ सत्यविज्ञानस्य तद्वदनं प्रति हेतुत्वद्योतनार्थोऽथशब्दः॥ श्रुत्यन्तरावष्टम्भेन भेदाभेदवादी शङ्कते। नन्विति॥ किं बृहदारण्यकश्रुत्या विकारस्य सत्यत्वमुक्तमित्येतावन्मात्रमुच्यते किं वा परमार्थसत्यत्वमिति विकल्प्याद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं दूषयति। न त्विति॥ भेदाभेदयोर्विरोधादेकोपाधावयोगाद्विकारस्य च रज्जुसर्पवत्कल्पितत्वानुमानादत्यन्ताबाध्यत्वाभिप्रायेण सत्यत्वं श्रुत्यन्तरेणैवोक्तमित्यर्थः॥ कथं तर्हि प्राणादिषु सत्यत्वमित्याशङ्क्योपचारं स्फोरयति। किंतर्हीति॥ इन्द्रियजनितप्रवृत्तिविषयत्वापेक्षं भूतत्वं सदित्युच्यते। तदविषयत्वा-

**नन्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥ १७ ॥**

---

वदति न तु ते रूपत्रयव्यतिरेकेण परमार्थतः सन्ति। तथा तान्यपि रूपाणि सदपेक्षया नैव सन्तीत्यतो नाविजानन्सत्यं वदति। विजानन्नेव सत्यं वदति। न च तत्सत्यविज्ञानमविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह। विज्ञानं त्वेव विजिज्ञासितव्यमिति। यद्येवं विज्ञानं भगवो

---

मेषां भूतद्वयं त्यदिति व्यवह्रियते। तथा च भूतपञ्चकं सच्च त्यच्चेति व्युत्पाद्य सत्यमिति यथोक्तम्। तथा तद्बीजभूतयोर्नामरूपयोस्तदात्मकत्वाच्च प्राणानां सत्यत्वं व्यावहारिकमिष्टमित्यर्थः॥ एतच्च प्राणादिषु मिथ्याभूतेष्वपि सत्यश्रुतिरविरुद्धेत्याह। तद्द्वारेणेति॥ प्राणादीनां व्यावहारिकसत्यत्वानुवादद्वारेणाध्यारोपापवादन्यायेन परमार्थसत्यस्य ब्रह्मणोऽवगतिर्विवक्षितेति मत्वा तेष्वपि सत्यत्वश्रुतिरविरुद्धेत्यर्थः॥ यथोक्तोऽर्थो विवक्षितो बृहदारण्यकश्रुताविव्यत्र गमकमाह। प्राणा वा इति॥ ननु श्रुत्यन्तरे विकारस्यापि व्यावहारिकं सत्यत्वमिष्टं प्रकृते तु न तदिष्यते भूम्न एव सत्यत्वाङ्गीकारात्। तथा च विरोधतादवस्थ्यमत आह। इहापीति॥ यदि प्राणस्यापि व्यवहारतः सत्यत्वमुपगतं किन्तर्हि सनत्कुमारस्य विवक्षितमित्याशङ्क्याह। एष त्विति॥ यदा वै जानात्यथ सत्यं वदतीति यद्व्याख्यातं तदन्वयव्यतिरेकाभ्यां स्फुटयन्नादौ व्यतिरेकमाह। नाविजानन्निति॥ परमार्थसत्यमविजानन्नपि वदत्यग्न्यादीनीत्याशङ्क्याह। यस्त्विति॥ तर्हि कथं सदेव परमार्थसत्यमिति वदतोऽभीष्टसिद्धिरित्याशङ्क्याह। न त्विति॥ तान्येव तर्हि रूपाणि पृथगवतिष्ठन्ते नेत्याह। तथेति॥ अतोऽस्य नास्ति सत्यवादित्वमित्युपसंहरति। इत्यत इति॥ व्यतिरेकं दर्शयित्वाऽन्वयमाचष्टे। विजानन्नेवेति॥ अस्तु तर्हि सत्यविज्ञानपूर्वकमतिवादित्वमित्या-

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति॥१॥१८॥ यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥ १८ ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥ २० ॥

---

विजिज्ञास इति। एवं सत्यादीनां चोत्तरोत्तराणां करोत्यन्तानां पूर्व्वपूर्व्वहेतुत्वं व्याख्येयम् ॥ १७ ॥

यदा वै मनुत इति । मतिर्मननं तर्को मन्तव्यविषय आदरः ॥ १८ ॥ आस्तिक्यबुद्धिः श्रद्धा ॥ १९ ॥

निष्ठा गुरुशुश्रूषादिस्तत्परत्वं ब्रह्मविज्ञानाय ॥ २० ॥

---

सत्याह । न चेति ॥ यद्येवं विज्ञानद्वारा सत्यविज्ञानं ध्येयमित्येवमिष्टश्चेदित्यर्थः । सत्यवदनं प्रति सत्यविज्ञानस्य यथा कारणत्वमुक्तं तथा पूर्व्वस्य पूर्व्वस्योत्तरस्मिन् कारणत्वेन द्रष्टव्यमित्यतिदिशति । एवमिति ॥ १७ ॥

विज्ञानकारणीभूतां मतिं व्याचष्टे । मतिरिति ॥ मननहेतुभूतां श्रद्धां व्याकरोति । आस्तीति ॥ १८ ॥ १९ ॥

श्रद्धाहेतुं निष्ठां व्याचष्टे । निष्ठेति ॥ २० ॥

**यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥ २१ ॥**

**यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥ २२ ॥**

---

यदा वै करोति कृतिरिन्द्रियसंयमश्चित्तैकाग्रता करणञ्च । सत्यां हि तस्यां निष्ठादीनि यथोक्तानि सम्भवन्ति विज्ञानावसानानि ॥ २१ ॥

सापि कृतिर्यदा सुखं लभते सुखं निरतिशयं वक्ष्यमाणं लब्धव्यं मयेति मन्यते तदा भवतीत्यर्थः । यथा दृष्टफलसुखा कृतिस्तथेहापि नासुखं लब्ध्वा करोति । भविष्यदपि फलं लब्ध्वेत्युच्यते । तदुद्दिश्य प्रवृत्त्युपपत्तेः । अथेदानीं कृत्यादिषूत्तरोत्तरेषु सत्सु सत्यं स्वयमेव प्रति-

---

निष्ठा निदानम् ॥ कृतिं विभजते । कृतिरिति ॥ कथं पुनरेतेषामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणं भवति तत्राह । सत्यां हीति ॥ २१ ॥

कृतिस्तर्हि कुतो भवतीति तत्राह । सापीति ॥ यदा सुखं लभते तदा भवतीति सम्बन्धः । ननु सुखलाभस्येन्द्रियसंयमादिव्यतिरेकेणाभावात्कथं सुखलाभाधीना कृतिरित्याशङ्क्याह । सुखमिति ॥ वक्ष्यमाणसुखलब्धव्यत्वाभिमानादेव यथोक्ता कृतिः सिध्यतीत्यर्थः ॥ सुखं लब्ध्वा करोतीत्येतद्दृष्टान्तेन साधयति । यथेति ॥ दृष्टं फलं पुत्रपश्वादि तज्जन्यसुखोद्दे-

यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥ २३ ॥

---

लभते च तद्विज्ञानाय प्रयत्नः कार्य इति प्राप्तं तत इदमुच्यते । सुखं त्वेव विजिज्ञासितव्यमित्यादि । सुखं भगवो विजिज्ञास इत्यभिमुखीभूतायाह ॥ २२ ॥

यो वै भूमा महत् निरतिशयं बह्विति पर्यायास्तत्सुखम् । ततोऽर्वाक्सातिशयत्वादल्पम् । अतस्तस्मिन्नल्पे सुखं नास्ति । अल्पस्याधिकतृष्णाहेतुत्वात् । तृष्णा च दुःखबीजम् । न हि दुःखबीजं सुखं दृष्टं ज्वरादि लोके । तस्माद्युक्तं नाल्पे सुखमस्तीति । अतो भूमैव सुखम् । तृष्णादिदुःखबीजत्वासम्भवाद्भूम्नः ॥ २३ ॥

---

सुखपूर्विका लोके कृतिर्दृष्टा । तथात्मन्यपि सुखं लब्ध्वैव करोति मत विना तदुद्देशमित्यर्थः । नन्विन्द्रियाणां मनसश्च संयमपूर्वकं सुखं भवति तथा च कथं तल्लब्ध्वा करोतीत्युच्यते तत्राह । भविष्यदपीति ॥ उत्तरप्रश्नमाकाङ्क्षापूर्वकमुत्थापयति । अथेत्यादिना ॥ २२ ॥

भूम्नोऽर्वागपि वैषयिकं सुखमस्तीत्याशङ्क्याह । ततोऽर्वागिति ॥ कथमल्पत्वेऽपि सुखत्वं बाध्यते तत्राह । अल्पस्येति ॥ दुःखरूपां तृष्णां प्रत्यल्पस्य सुखस्य हेतुत्वेऽपि कथं स्वयं सुखं न भवतीत्याशङ्क्याह । न हीति ॥ अल्पस्य सुखस्य दुःखात्मभावे सिद्धे फलितमाहात इति ॥ २३ ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्वि-
जानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणो-

---

किंलक्षणोऽसौ भूमेत्याह। यत्र यस्मिन् भूम्नि तत्त्वे नान्यद्द्रष्टव्यमन्येन करणेन द्रष्टाऽन्यो विभक्तो दृश्याद्न्यत्पश्यति तथा नान्यच्छृणोति। नामरूपयोरेवान्तर्भावाद्विषयभेदस्य। तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणम्। अन्येषाञ्चोपलक्षणार्थत्वेन मननन्त्वत्रोक्तं द्रष्टव्यम्। नान्यन्मनुत इति। प्रायशो मननपूर्व्वकत्वाद्विज्ञानस्य। तथा नान्यद्विजानाति। एवंलक्षणो यः स भूमा। किमत्र प्रसिद्धान्यदर्शनाभावो भूमोच्यते नान्यत्पश्यतीत्यादिना। अथान्यं न पश्यत्यात्मानं पश्यतीत्येतत्। किञ्चातो यद्यन्यदर्शनाद्यभावमात्रमित्युच्यते तदा द्वैतसंव्यवहारविल-

---

भूम्नः सविशेषत्वं निर्विशेषत्वं वेति प्रश्नपूर्व्वकं निर्व्विशेषत्वं निर्द्धारयति। किमित्यादिना॥ नान्यच्छृणोति स भूमेति सम्बन्धः। किमिति स्पर्शनादिष्वपि चक्षुर्दर्शनश्रवणयोरेव निषेध्यत्वेनात्र ग्रहणमित्याशङ्क्याह। नामेति॥ अनुक्तानां स्पर्शादीनामुपलक्षणार्थत्वेनात्र द्वयोर्ग्रहणं स्पर्शनाद्यविषयत्वस्यापि भूम्नि भावादित्याह। अन्येषामिति॥ अत्रेति लक्षणवाक्योक्तिः॥ तत्र हेतुमाह। प्रायश इति॥ यस्मिन्नधिकरणे तत्त्वविचारणायामन्योऽन्यं न पश्यति न शृणोति न मनुते न विजानाति स भूमेति द्रष्टृदृश्यादिविकल्पनिषेधेनाध्यासाधिकरणत्वोपलक्षितस्य विकल्पाविषयत्वमेव भूमलक्षणमित्युपसंहरति। एवमिति॥ उक्तमेव लक्षणं स्फुटमितुं विकल्पयति। किमत्रेति॥ लोकप्रसिद्धदर्शनादिविषयत्वाभावमात्रं भूम्नो लक्षणं तन्निषेधेन स्वविषयत्वं वेति विमर्शार्थः॥ कल्पितनृपक्षे को लाभः को वा दोष इति शिष्यः पृच्छति। किञ्चात

त्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित

यो भूमेत्युक्तं भवति। यथान्यदर्शनविशेषप्रतिषेधेनात्मानं पश्यतीत्युच्यते। तदेकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेत्। यद्येवं को दोषः स्यात्। नन्वयमेव दोषः संसारानिवृत्तिः। क्रियाकारकफलभेदो हि संसार इति। आत्मैकत्व एव क्रियाकारकफलभेदः संसारविलक्षण इति चेत्। न। आत्मनो निर्विशेषैकत्वाभ्युपगमे दर्शनादिक्रियाकारकफलभेदाभ्युपगमस्य शब्दमात्रत्वात्। अन्यदर्शनाद्यभावोक्तिपक्षेऽपि यत्रेत्यन्यन्नपश्यतीति च विशेषणेऽनर्थके स्यातामिति चेत्। दृश्यते हि लोके। यत्र शून्ये गृहेऽन्यन्न पश्यतीत्युक्ते स्तम्भादीनात्मानं च न पश्यतीति गम्यते। एव-

इति॥ आद्यमनूद्य तत्र लाभं दर्शयति। यदीति॥ अन्यस्य प्रविलयेन दर्शनादेर्विषयत्वं भूम्नि नास्तीत्येतावन्मात्रं तस्य लक्षणमिष्टं चेत्सर्वविकल्पातीतः प्रत्यगात्मा भूमेत्यलक्षणविधिरित्यर्थः॥ द्वितीयं पक्षमनूद्य तस्मिन्दोषं सूचयति। अथेत्यादिना॥ तमेव दोषं प्रश्नपूर्वकं स्फुटयति। यद्येवमित्यादिना॥ सति क्रियाकारकफलभेदे कथं संसारानिवृत्तिस्तत्राह। क्रियेति॥ सति भेदे क्रियादेः संसारत्वं लोके दृष्टं तद्वैलक्षण्यादेकस्मिन्नेव क्रियाकारकभावस्य न संसार इति चोदयति। आत्मैकत्व इति॥ एकस्मिन्क्रियादिभेदस्यासम्भवं दर्शयन्नुत्तरमाह। नात्मन इति॥ द्वितीयपक्षस्य दुष्टत्वे स्वीकृते प्रथमपक्षस्यापि समानदुष्टत्वमिति शिष्यः शङ्कते। अन्येति॥ आद्यपक्षेऽपि न पश्यतीत्येतावतैव दर्शनाद्यभावोक्तेर्यत्रान्यदिति च विशेषणे व्यर्थे स्यातामित्यर्थः॥ अर्थवदेवेदं वचनमित्याचार्यपक्षं शिष्यः स्वयमेव ब्रूते। दृश्यते हीति॥ लोके

इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥

भिन्नमपीति चेत् । न । तत्त्वमसीत्येकत्वोपदेशादधिकरणाधिकर्तव्यभेदानुपपत्तेः । तथा सदेकमेवाद्वितीयं सत्यमिति च षष्ठे निर्धारितत्वात् । अदृश्येऽनात्म्ये न सन्दृशे तिष्ठति रूपमस्य विज्ञातारमरे केन विजानीयादित्यादिश्रुतिभ्यः स्वात्मनि दर्शनाद्यनुपपत्तिः । यत्रेति विशेषणमनर्थकं प्राप्तमिति चेत् । न । अविद्याकृतभेदापेक्षत्वात् । यथा सत्यैकत्वाद्वितीयत्वबुद्धिं प्रस्तावपेक्ष्य सदेकमेवाद्वितीयमिति सङ्ख्याद्यनर्थमप्युच्यते । एवं भूम्न्येकस्मिन्नेव यत्रेति विशेषणम् । अविद्यावस्थायामन्यदर्शनानुवादेन च भूम्नः । अतस्तदभावत्वलक्षणस्य विवक्षितत्वान्नान्यत्पश्यतीति विशेषणम् । तस्मात्संसारव्यवहारो भूम्नि नास्तीति समुदायार्थः । अथ यत्रा-

---

हि यत्र भूम्न्ये स्वे नान्यत्पश्यति तद्वदस्तीयमिति प्रयोगो दृश्यते नच तस्य नैरर्थक्यमिष्टम् । व्यवहाराकृत्वाद्यपेक्षे धनधान्याद्यदर्शनेऽपि कन्यादीन् स्वस्य न च पश्यतीति तस्य नैरर्थक्यं न गम्यते । किन्तु कन्यादीनां तत्र च दर्शनमिष्टम् । तथा यत्र नान्यत्पश्यतीत्यत्रापि विशेषणवैयर्थ्ये समाधानं वक्तव्यमित्यर्थः ॥ किं विशेषणार्थवत्त्वानुपपत्त्या भूम्न्यधिकरणाधिकर्तव्यभावः स्वात्मदर्शनं च वाच्यमित्युच्यते किं वा श्रुतस्य गतिर्वक्तव्येति पृच्छ्यते तत्राद्यं दूषयति । नेत्यादिना ॥ तथा तत्त्वमसीति यदित्यर्थः । निर्धारितत्वादधिकरणाधिकर्तव्यभेदानुपपत्तिरिति शेषः ॥ यत्रान्यत्र पश्यतीति विशेषणादात्मनः स्वदर्शनं प्राप्तमिति तत्राह । अदृश्य इति ॥ द्वितीयमनूद्य गतिमाह । यत्रेत्यादिना ॥ परिहारभागं दृष्टान्तेन व्युत्पादयति । यथेति ॥ एकस्मिन्नेव भूम्नि यत्रेति विशेषणमनर्थमपि प्रयुज्यते । अविद्यानुवादेनाधिकरणादिविकल्पापेक्ष-

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दास-

---

विद्याविषयेऽन्योऽन्येनान्यत्पश्यतीति तदल्पमविद्याकालभावि इत्यर्थः। यथा स्वप्नदृश्यं वस्तु प्राक् प्रतिबोधात्तत्काल-भावीति तद्वत्। तत एव तन्मर्त्यं विनाशि स्वप्नवस्तुवदेव तद्विपरीतो भूमा यस्तदमृतम्। तच्छब्दोऽमृतत्वपरः। स तर्ह्येवंलक्षणो भूमा हे भगवन् कस्मिन् प्रतिष्ठित इत्युक्तवन्तं नारदं प्रत्याह सनत्कुमारः। स्वे महिम्नीति स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितो भूमा। यदि प्रतिष्ठामिच्छसि क्वचित् यदि वा परमार्थमेव पृच्छसीति न महिम्न्यपि प्रतिष्ठित इत्यवोचाम। अप्रतिष्ठि-तोऽनाश्रितो भूमा क्वचिदपीत्यर्थः। यदि स्वमहिम्नि प्रतिष्ठो भूमा कथं तर्ह्यप्रतिष्ठ उच्यते। शृणु। गोऽश्वादि

---

यत्वलक्षणस्य भूम्नो लक्षणस्य विवक्षितत्वादित्याह। एवमिति॥ यद्-विद्यावस्थमन्यदर्शनादि तदनुवादेन नान्यत्पश्यतीति विशेषणं भूम्नि न विरुध्यते। दर्शनाद्यविषयत्वलक्षणस्य भूम्नो लक्षणस्य विवक्षितत्वादि-त्याह। यत्रेति॥ लक्षणवाक्यार्थमुपसंहरति। तस्मादिति॥ दर्शनादि-सकलसांसारिकव्यवहाराभावोपलक्षितं तत्त्वं भूमेत्यर्थः॥ अथ यदल्पमित्यादि-वाक्यं व्याकरोति। अथेति॥ परिच्छिन्नस्याविद्याकालभावित्वं दृष्टान्तेन विवृणोति। यथेति॥ तत एव परिच्छिन्नत्वादिति। यावत्। कथं तदमृतमिति भूम्नि तच्छब्दप्रयोगस्तत्राह। तच्छब्द इति॥ भूम्नः सुखत्ववचनानन्तरं वाक्यं पृच्छति। स तर्हीति॥ व्यवहारदृष्ट्या प्रश्नो वस्तुदृष्ट्या वेति विकल्प्याद्यं प्रत्याह। स्वे महिम्नीति॥ द्वितीयमनूद्य निराकरोति। यदीति॥ पूर्वापरविरोधमाशङ्क्य परिहरति। यदी-त्यादिना॥ भूम्नः स्वतो ऽन्यस्मिन् प्रतिष्ठितत्वाभावेऽसौ मुच्यते तस्मान्नो

भाष्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति ह होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥ २४ ॥

स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्व्व-

---

इह महिमेत्याचक्षते । गावश्चाश्वाश्च गोऽश्वं द्वन्द्वैकवद्भावः । सर्व्वत्र गवाश्वादिमहिमेति प्रसिद्धम् । तदाश्रितस्तत्प्रतिष्ठश्चैत्रो भवति । यथा नाहमेवं स्वतोऽन्यं महिमानमाश्रितो भूमा चैत्रवदिति । ब्रवीम्यत्र हेतुत्वेनान्यो ह्यन्यस्मिन् प्रतिष्ठित इति व्यवहितेन सम्बन्धः ॥ किन्त्वेवं ब्रवीमीति होवाच स एवेत्यादि ॥ २४ ॥

कस्मात्पुनः क्वचिन्न प्रतिष्ठित इत्युच्यते । यस्मात्स एव भूमा । अधस्तान्न तद्व्यतिरेकेणान्यद्विद्यते यस्मिन् प्रतिष्ठितः स्यात् । तथोपरिष्टादित्यादि समानम् । सति भूम्नोऽन्यस्मिन् भूमा हि प्रतिष्ठितः स्यान्न तु तदस्ति । स एव तु सर्व्वम् । अत-स्तस्मादसौ न क्वचित्प्रतिष्ठितः । यत्र नान्यत्पश्यतीत्यधि-करणाधिकर्त्तव्यतानिर्द्देशात्स एवाधस्तादिति च परोक्ष-

---

होत्यादिवाक्यस्य हेतुना तेन व्यवहितेनाहमेवं ब्रवीमीत्यस्य सम्बन्ध इति योजना ॥ कथं तर्हि ब्रवीति भवानित्याशङ्क्याह । किन्त्विति ॥ २४ ॥

अवतारितमेव वाक्यं प्रश्नपूर्व्वकमवतार्य्य व्याचष्टे । कस्मादित्या-दिना ॥ उक्तमेवार्थं व्यतिरेकद्वारा विवृणोति । सतीति ॥ अहङ्कारा-देशोपदेशस्याभिप्रायमाह । यत्रेति ॥ कोऽसावहङ्कारेणादिश्यत

मित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुप-रिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्त-रतोऽहमेवेदꣳ सर्व्वमिति ॥ १ ॥ अथात आ-त्मादेश एव आत्मैवाधस्तादात्मोपरिष्टादात्मा

---

निर्द्देशात् । द्रष्टुर्जीवादन्यो भूमा स्यादित्याशङ्का कस्य-चिन्माभूदिति । अथातोऽनन्तरमहङ्कारेणादिश्यत इत्य-हङ्कारादेशः । द्रष्टुरनन्यत्वदर्शनार्थं भूमैव निर्दिश्यतेऽह-ङ्कारेणाहमेवाधस्तादित्यादिना । अहङ्कारेण देहादिस-ङ्घातोऽप्यादिश्यतेऽविवेकिभिरित्यतस्तदाशङ्का माभूदिति । अथानन्तरमात्मादेश आत्मनैव केवलेन सत्स्वरूपेण शुद्धे-नादिश्यते । आत्मैव सर्व्वतः सर्वमित्येवमेकमजं सर्वतो व्योमवत्पूर्णमन्यशून्यं पश्यन् स वा एष विद्वान्मननविज्ञा-नाभ्यामात्मरतिरात्मन्येव रती रमणं यस्य सोऽयमात्म-रतिस्तथात्मक्रीडः देहमात्रसाधना रतिर्बाह्यसाधना क्रीडा । लोके स्त्रीभिः सखिभिश्च क्रीडतीति दर्शनात् । न

---

इत्याशङ्काप्रयोजनानुवादपूर्व्वकमाह । द्रष्टुरिति ॥ अहङ्कारादेशात् पृथगात्मादेशस्य तात्पर्य्यमाह । अहङ्कारेणेति ॥ उक्तार्थविज्ञानवतः फलमवतारयति । आत्मैवेति ॥ एकमिति सजातीयभेदराहित्योक्तिः ॥ अन्यशून्यमिति विजातीयभेदशून्यत्वमुच्यते ॥ रत्यात्मक्रीडयोरवा-न्तरभेदं दर्शयति । देहमात्रेणेति ॥ क्रीडा बाह्यसाधने सति लोकप्रसि-द्धिमाह । लोक इति ॥ देहस्य जीविते च भोगत्यागयोश्च निमित्तं बाह्यवस्तु तत्र सर्व्वत्र निरपेक्षो यदृच्छालाभेनाप्यासक्तिवर्जितो विद्वानित्याह ।

पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्व्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्व्वेषु

---

तथा विदुषः किन्त्वात्मविज्ञाननिमित्तमेवोभयं भवतीत्यर्थः । मिथुनं द्वन्द्वजनितं सुखं तदपि द्वन्द्वनिरपेक्षं यस्य विदुषस्तथानन्दः शब्दादिनिमित्तः । आनन्दोऽविदुषां न तथाऽस्य विदुषः किन्त्वात्मनिमित्तमेव सर्वं सर्वदा सर्वप्रकारेण च । देहजीवितभोगादिनिमित्तबाह्यवस्तुनिरपेक्ष इत्यर्थः । स एवं लक्षणो विद्वान् जीवन्नेव स्वाराज्येऽभिषिक्तः । पतितेऽपि देहे स्वराडेव भवति । यत एवम्भवति तत एव तस्य सर्व्वेषु लोकेषु कामचारो भवति । प्राणादिषु पूर्वभूमिषु तत्रास्येति तावन्मात्रपरिच्छिन्नकामचारित्वमुक्तमन्यराजत्वं चार्थप्राप्तं सातिशयत्वाद्यथा प्राप्तस्वाराज्यकामचारत्वानुवादेन तत्तन्निवृत्तिरिहोच्यते स स्वराडित्यादिना । अथ पुनर्येऽन्यथा ऽत उक्तदर्शनादन्यथा वैपरीत्येन यथोक्तमेव वा सम्यङ्न

---

देहेति ॥ जीवन्मुक्तिमुक्त्वा विदेहमुक्तिं दर्शयति । स इति । स्वाराज्यं निमित्तीकृत्य फलान्तरमाह । यत एव मिति । स्वाराज्यवत्त्वं लोककामचारयोस्तात्पर्यमाह । प्राणादिष्विति ॥ यावत्प्राणो गतं तत्रास्य यथाकामचारो भवतीत्यादिना परिच्छिन्नं यदुक्तं तत्तु पूर्वभूमिषु फलमुक्तमत्र तु परमानन्दप्राप्तौ तस्याऽऽपेक्षिकत्वात् न तु सोपाधिकं रूपमित्यर्थः ।

लोकेषु कामचारो भवति। अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्व्वेषु लोकेष्वकामचारो भवति ॥ २ ॥ २५ ॥

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशा-

---

विदुस्तेऽन्यराजानो भवन्ति। अन्यः परो राजा स्वामी एषां तेऽन्यराजानस्ते। किञ्च क्षय्यलोकाः क्षयो लोक एषां ते क्षय्यलोकाः। भेददर्शनस्याल्पविषयत्वादल्पञ्च तन्मर्त्यमित्यवोचाम। तस्माद्ये द्वैतदर्शिनस्ते क्षय्यलोकाः स्वदर्शनानुरूप्येणैव भवन्त्यत एव तेषां सर्व्वेषु लोकेष्वकामचारो भवति ॥ २५ ॥

तस्य ह वा एतस्येत्यादि स्वाराज्यं प्राप्तस्य प्रकृतस्य विदुष इत्यर्थः। प्राक्सदात्मविज्ञानात्स्वात्मनोऽन्यस्मात्सतः प्राणादेर्नामान्तस्योत्पत्तिप्रलयावभूतां सदात्मविज्ञाने तु सतीदानीं स्वात्मत एव संवृत्तौ तथा सर्व्वोऽप्यन्यो व्यवहार आत्मत एव विदुषः। किञ्च तदेतच्छास्त्रार्थे

---

फलप्रदर्शनद्वारेण स्तुत्वा विद्यामविद्वन्निन्दाद्वारापि तां स्तौति। अथेत्यादिना। ते क्षय्यलोका भवन्तीति सम्बन्धः॥ भेददर्शिनां विनाशिफलवत्त्वे हेतुमाह। भेददर्शनस्येति॥ परिच्छिन्नस्य विनाशित्वं वचनं तस्मादिति परामृशति॥ २५ ॥

उक्तविद्यास्तुत्यर्थमेव विदुषः स्रष्टृत्वमाह। तस्येति॥ तथा विदुषः स्रष्टृत्वव्यवहारवदित्यर्थः। क्रीडादिरन्यो व्यवहारो न केवलं प्राक्मोक्षमिह विद्याफलं किन्तु जन्मोत्कर्षञ्चाह। किञ्चेति तच्छब्दार्थः

ऽऽत्मत: स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावा-त्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मत: सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मत: कर्म्माण्यात्मत एवेदꣳ सर्वमिति ॥१॥ तदेषश्लोको

---

एष श्लोको मन्त्रोऽपि भवति। न पश्य: पश्यतीति। पश्यो यथोक्तदर्शी विद्वानित्यर्थ:। मृत्युं मरणम्। रोगं ज्वरादि। दु:खतां दु:खभावञ्चापि न पश्यति। सर्व्वं ह सर्वमेव स पश्य: पश्यत्यात्मानमेव सर्व्वं तत: सर्व्वमाप्नोति सर्व्वश: सर्व्वप्रकारैरिति। किञ्च स विद्वान् प्राक्सृष्टिप्रभेदादेकधैव भवत्येकधैव च सन् त्रिधादिभेदैरनन्तभेदप्रकारो भवति सृष्टिकाले। पुन: संहारकाले मूलमेव स्वं पारमार्थिकमेकधाभावं प्रतिपद्यते। स्वतन्त्र एवेति विद्यां फलेन प्ररोचयन् स्तौति। अथेदानीं यथोक्ताया विद्याया: सम्यगवभासकारणं सुखावभासकारणस्यैवादर्शस्य विशु-

---

सप्तम्या निर्दिश्यते। स च विद्याफलरूपः॥ न पश्य इति मन्त्रपा-दाद्य व्याचष्टे। पश्यतीत्यादिना॥ सर्व्वमाप्नोतीति पूर्णतापरिच्छेद-भ्रमव्यावर्त्तनेन विवक्षिता न तु क्रिमिकीटकादिभावोऽपुरुषार्थत्वप्र-सङ्गादिति द्रष्टव्यम्॥ विद्यास्तुतिपौष्कल्यार्थं वस्तुतविद्याफलमपि निर्गु-णमनुविदाप्नोतीत्याह। किञ्चेति॥ त्रिधा तेजोबन्नरूपेण। पञ्चसप्ता-दिरादिशब्दार्थः। विद्यां तत्फलं तदपेक्षितां स्तुतिञ्चाभिधाय:हार-

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताᳪ सर्व्वᳪ ह पश्यः पश्यति सर्व्वमाप्नोति सर्व्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतञ्च दश चैकश्च सहस्राणि च विᳪशतिराहारशुद्धौ सत्त्वशुद्धिः

द्धिकारणं साधनमुपदिश्यते आहारशुद्धौ । आह्रियत इत्याहारः शब्दादिविषयज्ञानम् । भोक्तुर्भोगायाह्रियते तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धी रागद्वेषमोहदोषैरसंसृष्टविषयविज्ञानमित्यर्थः । तस्यामाहारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्म्मल्यं भवति । सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवाऽविच्छिन्ना स्मृतिरविस्मरणं भवति । तस्यां च लब्धायां स्मृतिलम्भे सति सर्व्वेषामविद्याकृतानर्थपाशरूपाणामनेकजन्मान्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां विप्रमोक्षो विशेषेण मोक्षणं विनाशो भवतीति । यत एतदुत्तरोत्तरं यथोक्तमाहारशुद्धिमूलं तस्मात्सा कार्य्येत्यर्थः । सर्वं शास्त्रार्थमशेषत उक्त्वाऽऽख्या-

मूलापितादेशस्तमर्थमाह । चेति ॥ रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन्नित्यादिस्मृतिमाश्रित्याहारपदं व्याकरोति । आह्रियत इतीति ॥ कथं तस्याह्रियमाणत्वं तत्राह । भोक्तुरिति ॥ कीदृशी तस्य शुद्धिरित्याशङ्क्याह । रागेति ॥ आहारशुद्धिफलमाह । तस्यामिति ॥ अन्तःकरणशुद्धिफलं कथयति । सत्त्वेति ॥ स्मृतिलाभफलं दर्शयति । तस्यां चेति ॥

सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥ २६ ॥ इति सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

---

यिकामुपसंहरति श्रुतिः । तस्मै मृदितकषायाय वार्क्षीरादिरिव कषायो रागद्वेषादिदोषः सत्त्वस्य रञ्जनारूपत्वात्स ज्ञानवैराग्याभ्यासरूपक्षालेन क्षालितो मृदितो विनाशितो यस्य नारदस्य तस्मै योग्याय मृदितकषायाय तमसोऽविद्यालक्षणात्पारं परमार्थतत्त्वं दर्शयति दर्शितवानित्यर्थः । कोऽसौ भगवानुत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिं वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानित्येवंधर्मा सनत्कुमारः । तमेव सनत्कुमारं देवं स्कन्द इत्याचक्षते कथयन्ति तद्विदः । द्विवचनमध्यायपरिसमाप्त्यर्थम् ॥ २६ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ छान्दोग्योपनिषद्विवरणे सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

---

भवतीत्याहारशुद्धिरपेक्षितेति शेषः ॥ प्रकृतव्याख्यातार्थमुपसंहरति । यत इति ॥ तस्मै मृदितकषायायेत्यादिवाक्यमवतार्य व्याचष्टे । सर्वमिति ॥ आगतिं गतिमागमापायौ । तस्य च वैशिष्ट्यान्तरमाह । तमेवेति ॥ २६ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

॥ हरिः ॐ ॥ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश-

---

ॐ परमात्मने नमः ॥ यद्यपि दिग्देशकालादिभेदशून्यं ब्रह्म सदेकमेवाद्वितीयमात्मैवेदं सर्वमिति षष्ठसप्तमयोरधिगतं तथापीह मन्दबुद्धीनां दिग्देशादिभेदवद्वस्त्वित्येवं भाविता बुद्धिर्न शक्यते सहसा परमार्थविषयीकर्त्तुमित्यनधिगम्य च ब्रह्म न पुरुषार्थसिद्धिरिति तदधिगमाय हृदयपुण्डरीकदेश उपदेष्टव्यः। यद्यपि सत्सम्यक्प्रत्ययैकविषयं निर्गुणञ्चात्मतत्त्वं तथापि मन्दबुद्धीनां गुणवत्त्वस्येष्टत्वात्सत्यकामादिगुणवत्त्वञ्च वक्तव्यम्। तथा यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमुपरमो भवति तथाप्यनेकजन्मविषयसेवाभ्यासजनिता विषयविषया तृष्णा न सहसा निवर्त्तयितुं शक्यत इति ब्रह्मचर्यादिसाधनविशेषो विधातव्यः। तथा यद्यप्यात्मैकत्वविदां

---

पूर्व्वस्मिन्नध्यायद्वये निर्व्विशेषमात्मतत्त्वमनवच्छिन्नं सदानन्दैकतानमावेदितं तथा चोपनिषदारम्भेऽचरितार्थं किमवशिष्यते यदर्थमध्यायान्तरमित्याशङ्क्याह। यद्यपीति॥ कर्त्तुमिति तदधिगमाय विशिष्टोपदेश उपदेष्टव्य इति सम्बन्धः। मन्दबुद्धीनां तर्हि परमार्थवस्तुनो ब्रह्मणोऽधिगतिरपेक्षितेत्यर्थः॥ न केवलं मन्दाधिकारिणां ब्रह्माधिगमशेषत्वेन हृदयदेश उपदेश एवात्र कर्त्तव्यः किन्तु पूर्व्वमात्मगुणाद्यर्थान्तरोपदेशश्च कार्य्य इत्याह। यद्यपीति॥ अवशिष्टमर्थान्तरमुपदेष्टव्यमन्वाचष्टे। तथेति॥ मन्दधियां ब्रह्मधीशेषत्वेन देशविशेषवद्गुणविशेषवच्च ब्रह्मचर्य्यादिसाधनविशेषो विधातव्य इति सम्बन्धः। यद्यो-

स्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥ तञ्चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः

गन्तृगमनगन्तव्याभावादविद्यादिशेषस्थितिनिमित्तक्षये गगन इव विद्युदुद्भूत इव वायुर्दग्धेन्धन इवाग्निः स्वात्मन्येव निवृत्तिस्तथापि गन्तृगमनादिवासितबुद्धीनां हृदयदेशगुणविशिष्टब्रह्मोपासकानां मूर्धन्यया नाड्या गतिर्वक्तव्येत्यष्टमः प्रपाठक आरभ्यते। दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसत् अद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति। सन्मार्गस्थास्तावद्भवन्तु ततः शनैः परमार्थसदपि ग्राहयिष्यामीति मन्यते श्रुतिः। अथानन्तरं यदिदं वक्ष्यमाणं दहरमल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्म इव वेश्म द्वारपालादिमत्त्वात्। अस्मिन् ब्रह्मपुरे

तात्मज्ञानवतां विधिं विनापि विषये वैमुख्यसम्भवात्किं विधिनेत्याशङ्क्याह। यद्यपि ब्रह्मविदामिति ॥ तथा साधनविशेषो वक्तव्योऽवशिष्यते तथोपासकानां गतिश्च वक्तव्येत्यवशिष्टमर्थान्तरमाह। तत्रेति ॥ एकत्वदर्शिनां गन्त्रादिसर्वभेदप्रत्ययासम्भवादविद्यादिशेषस्य देहस्थितिनिमित्तस्य क्षये सति स्वात्मन्येव निवृत्तिसम्भवात्कुतो गतिर्वक्तव्येत्याशङ्क्याह। यद्यप्यात्मैकत्वविदामिति ॥ अविद्यादिशेषस्थितिनिमित्तक्षये स्वात्मन्येव निवृत्तिरित्युत्तरेण सम्बन्धः। स्वात्मनिर्वाणोऽपि ज्ञातकल्पत्यागेन स्वाभाविकस्वरूपावस्थाननियमे दृष्टान्तमाह। गगन इवेति ॥ अनेकोदाहरणोपादानं बुद्धिसौकर्यार्थम् ॥ उक्तमेवाध्यायतात्पर्यं सङ्क्षिप्य दर्शयति। दिग्देशेति ॥ दिशा देशेन गुणैर्गत्या फलभेदेन च शून्यं तदवच्छेदशून्यमिति यावत ॥ तत्र दिगाद्यनवच्छिन्नत्वे हेतुमाह। अद्वयमिति ॥ तर्हि

तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासि-

ब्रह्मणः परस्य पुरम्। राज्ञोऽनेकप्रकृतिमद्यथा पुरं तथेदमनेकेन्द्रियमनोबुद्धिभिः स्वाम्यर्थकारिभिर्युक्तमिति ब्रह्मपुरम्। पुरे च वेश्म राज्ञो यथा तथा तस्मिन् ब्रह्मपुरे शरीरे दहरं वेश्म ब्रह्मण उपलब्ध्यधिष्ठानमित्यर्थः। यथा हि विष्णोः शालग्रामः। अस्मिन् हि स्वविकारशुङ्गे देहे नामरूपव्याकरणाय प्रविष्टं सदाख्यं ब्रह्म जीवेनात्मनेत्युक्तम्। तस्मादस्मिन् हृदयपुण्डरीके वेश्मनि उपसंहृतकरणैर्बाह्यविषयविरक्तैर्विशेषतो ब्रह्मचर्यसत्यसाधनाभ्यां युक्तैर्वक्ष्यमाणगुणवद्ध्यायमानैर्ब्रह्मोपलभ्यत इति प्रकरणार्थः। दहरोऽल्पतरोऽस्मिन्दहरे वेश्मनि वेश्मनोऽल्पत्वात्तदन्तर्वर्त्तिनोऽल्पतरत्वं वेश्मनः। अन्तराकाश आकाशाख्यं ब्रह्म। आकाशो वै नामेति हि वक्ष्यति।

---

तेषां भ्रमापोहार्थं परमार्थसदद्वयं ब्रह्म ग्राहयितव्यं किमित्यन्यथोपदिश्यते तत्राह। सन्मार्गस्था इति॥ अध्यायतात्पर्यं सङ्क्षेपविस्तराभ्यां दर्शयित्वा श्रुत्यक्षराणि व्याकरोति। अथेत्यादिना॥ उत्तमबुद्धीन्प्रति निर्विशेषब्रह्मोपदेशानन्तरं मन्दबुद्धीन्प्रति सविशेषमुपदिश्यते ब्रह्मेत्यर्थः॥ तत्र तावदुपास्यायतनं निर्दिशति। यदिदमिति॥ हृदयपुण्डरीकस्य वेश्मसादृश्ये हेतुमाह। द्वारपालादीति॥ तस्य ह वा एतस्य पञ्च देवसुषय इत्यादिश्रुतेरुक्तहेतुसिद्धिः॥ तत्रान्वयं दर्शयति। अस्मिन्निति॥ शरीरस्य ब्रह्मपुरत्वं दृष्टान्तेन साधयति। राज्ञ इति तत्रोक्तवेश्मदृष्टान्तेन स्पष्टयति। पुरे चेति॥ कथं पुनः सर्व्वगतस्य निरवयवस्य ब्रह्मणो यथोक्तवेश्मनिष्ठत्वमित्याशङ्क्याह। ब्रह्मण इति॥ ननु संसारिणो

तव्यमिति ॥ २ ॥ ब्रूयाद्यावान्वा अयमाकाश-स्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावा-

---

आकाश इवाशरीरत्वात्सूक्ष्मत्वसर्व्वगतत्वसामान्याच्च तस्मि-न्नाकाशाख्ये यदन्तर्मध्ये तदन्वेष्टव्यम्। तद्वाव तदेव च विशेषेण विजिज्ञासितव्यम्। गुर्व्वाश्रयश्रवणाद्युपायैरन्विष्य च साक्षात्करणीयमित्यर्थः। तञ्चेदेवमुक्तवन्तमाचार्य्यं यदि ब्रूयुरन्ते-वासिनश्चोदयेयुः कथं यदिदमस्मिन् ब्रह्मपुरे परिच्छिन्ने ऽन्तर्दहरं पुण्डरीकं वेश्म ततोऽप्यन्तराऽल्पतर एवाकाशः। पुण्डरीक एव वेश्मनि तावत्किं स्यात् किन्ततोऽल्पतरे खे यद्भवेदित्याह। दहरोऽस्मिन्नन्तराकाशः किन्तदत्र विद्यते। न किञ्चन विद्यत इत्यभिप्रायः। यदि नाम बदरमात्रं किमपि विद्यते किं तस्यान्वेषणेन विजिज्ञासनेन वा फलं विजिज्ञा-सितुः स्यात्। अतो यत्तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन

---

ब्रह्मातिरिक्तस्य स्वकर्म्मोपार्जितेन शरीरेण स्वामित्वसम्बन्धो न ब्रह्मणस्तदसम्बन्धित्वात्कथं तत्रोपलब्धिरत आह। अस्मिन् हीति॥ ब्रह्मणो जीवात्मना सृष्टे कार्य्ये जलार्कवत्प्रवेशे हृदयपुण्डरीकस्य ब्रह्मोपलब्ध्यधिष्ठानत्वं पूर्व्वोक्तमविरुद्धमित्याह। तस्मादिति॥ अन्त-राकाशस्याल्पतरत्वे हेतुमाह। वेश्मन इति॥ आकाशशब्दस्य भूताकाशविषयत्वं व्यावर्त्तयति। आकाशाख्यमिति॥ कथं वाक्यशेषेऽप्याकाशशब्दो ब्रह्मणि वर्त्तते तत्राह। आकाश इवेति॥ तस्मिन्यद-न्तस्तदाश्रयेण यच्चान्वेष्टव्यं तस्मिन्वा खे महिम्नि यदन्तस्तदाकाशाख्यं ब्रह्म तदन्वेष्टव्यं तस्मिन्वा हृदयपुण्डरीकावच्छिन्ने नभसि यदन्त-राकाशाख्यं ब्रह्म तदन्वेष्टव्यमिति योजना॥ दहरोऽस्मिन्नित्यादिवा-क्यस्य यथाश्रुतमर्थं गृहीत्वा चोद्यमुत्थापयति। तञ्चेदिति॥ तदेव

पृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति

---

यवोचनमित्युक्तवतः स आचार्यो ब्रूयादिति श्रुतेर्वचनं शृणुत। तत्र यद्ब्रूथ पुण्डरीकान्तःस्थस्याल्पत्वात्तत्स्थमल्पतरं स्यादिति। तदसत्। न हि खं पुण्डरीकवेश्मगतं पुण्डरीकादल्पतरं मत्वाऽवोचं दहरोऽस्मिन्नन्तराकाश इति। किं तर्हि पुण्डरीकमल्पं तदनुविधायि तत्स्थमन्तःकरणं पुण्डरीकाकाशं परिच्छिन्नं तस्मिन्विशुद्धे संहृतकरणानां योगिनां स्वच्छ इवोदके प्रतिबिम्बरूपमादर्श इव च शुद्धे स्वच्छं विज्ञानज्योतिःस्वरूपावभासं तावन्मात्रं ब्रह्मोपलभ्यत इति। दहरोऽस्मिन्नन्तराकाश इत्यवोचाम अन्तःकरणोपाधिनिमित्तम्। स्वतस्तु यावान्वै प्रसिद्धः परिमाणतोऽयमाकाशो भौतिकस्तावानेषोऽन्तर्हृदय आकाशो यस्मि-

---

चोद्यमाकाङ्क्षाद्वारा विवृणोति। कथमित्यादिना॥ भवतु परिच्छिन्ने शरीरे पुण्डरीकाकारस्य हृदयस्याल्पत्वं तदन्तर्वर्तिन आकाशस्य ततोऽल्पतरत्वं तथापि प्रकृते किं स्यादित्याशङ्क्याह। पुण्डरीक एवेति॥ किंशब्दस्य प्रश्नविषयत्वं व्यावर्तयति। न किञ्चेति॥ हृदयपुण्डरीकान्तर्वर्तिन आकाशस्यापेक्ष्याद्यं दूषयति। यदि नावेति॥ फलानुपलम्भोऽतःश-ब्दार्थः। तत्रेत्यन्तर्वर्त्याकाशोक्तिः। शिष्याचार्यसङ्गतिरित्यात्मस्तुतत्वात्कस्येदं नियोगवचनमित्याशङ्क्याह। इति श्रुतेरिति॥ किमाचार्यो ब्रूयादित्यपेक्षायां वक्ष्यमाणेऽर्थे शिष्याणां मनःसमाधानमादौ प्रार्थयत इत्याह। शृणुतेति॥ श्रोतव्यमेव दर्शयितुं शिष्योक्तमनुवदति। तत्रेति॥ किमाकाशस्य स्वाभाविकं दहरत्वमपेक्ष्य चोद्यते किंवा परोपाधिनिमित्तमिति विकल्पाद्यं दूषयति। तदसदिति॥ ततश्च तस्य स्वाभाविकं

यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ॥३॥
तञ्चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ

---

अन्वेष्टव्यं विजिज्ञासितव्यञ्चावोचाम। नाप्याकाशतुल्य परिमाणत्वमभिप्रेत्य तावानित्युच्यते। किं तर्हि ब्रह्मणोऽणुरूपस्य दृष्टान्तान्तरस्याभावात्कथं पुनर्नाकाशसममेव ब्रह्मेत्यवगम्यते। येनावृतं खञ्च दिवं महीञ्च। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। तस्मिन् खल्वक्षरे गार्ग्याकाश इत्यादिश्रुतिभ्यः। किञ्चोभेऽस्मिन्द्यावापृथिवी ब्रह्माकाशे बुद्ध्युपाधिविशिष्टेऽन्तरेव समाहिते सम्यगाहिते स्थिते। यथा वा अरा नाभावित्युक्तं हि। तथोभावग्निश्च वायुश्चेत्यादि समानम्। यच्चास्यात्मन आत्मीयत्वेन देहवतोऽस्ति विद्यत इह लोके। तथा यच्चात्मीयत्वेन न विद्यते। नष्टं भविष्यच्च नास्तीत्युच्यते। न त्वत्यन्तमेवासत्।

---

दहरत्वमाश्रित्य चोद्यं निरवकाशमिति शेषः॥ कथं तर्हि दहरत्वोक्तिराकाशस्येत्याशङ्क्याह। किन्त्विति॥ तस्मिन्विशुद्धे तावन्मात्रं ब्रह्म यथोक्तविशेषणं योगिनां विषयेभ्यो विनिवर्तितान्तःकरणानामुपलभ्यत इति सम्बन्धः॥ अन्तःकरणस्य शुद्धत्वे दृष्टान्तमाह। स्वच्छ इवेति॥ ब्रह्मणस्तस्मिन्नुपलभ्यमानत्वे प्रतिबिम्बरूपमित्युदाहरणं प्रतिपत्तिसौकर्यार्थम्॥ उदाहरणान्तरं ब्रह्मणो नैसर्गिकमागन्तुकञ्च व्यवधानं नास्तीत्युपलब्धिविषयं विशिनष्टि। स्वच्छमिति॥ तादृगेव दहरत्वमादाय चोद्यते चेदनौपाधिकं महत्त्वमुपेत्य समाधिः सम्भवतीति विकल्पान्तरं निरस्यति। स्वतस्त्विति॥ यस्मिन्नन्वेष्टव्यमात्मवेद्य वक्तेति शेषः। यावानाकाशानिति वचनादाकाशेन तुल्यपरिमाणत्वं ब्रह्मणोऽभिमतम्। तथाच ज्यायो नाकाशादित्यादि विरुद्धमित्याशङ्क्याह। नापीति॥

सर्व्वाणि च भूतानि सर्वे च कामा यदैनज्जरा वाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति ॥४॥

---

तस्य ह्याकाशे समाधानानुपपत्तेः। तद्येवमुक्तवन्तं ब्रूयुः पुनरन्तेवासिनोऽस्मिंश्चेद्यथोक्ते चेदादि ब्रह्मपुरोपलक्षितान्तराकाश इत्यर्थः। इदं सर्व्वं समाहितं सर्व्वाणि च भूतानि सर्व्वे च कामाः। कथमाचार्य्येणानुक्ताः कामा अन्तेवासिभिरुच्यन्ते। नैष दोषो यस्मात्स्येहास्ति यच्च नास्तीति। उक्ता एव ह्याचार्य्येण कामाः। अपि च सर्व्वशब्देन चोक्ता एव कामाः। यदा यस्मिन् काले एतच्छरीरं ब्रह्मपुराख्यं जरावलिपलितादिलक्षणा वयोहानिर्व्वा प्राप्नोति शस्त्रादिना वृक्णं प्रध्वंसते विध्वंसते विनश्यति किन्ततोऽन्यदतिशिष्यते। घटाश्रितक्षीरदधिस्नेहादिवद्घटनाशे देहनाशेऽपि देहाश्रयमुत्तरोत्तरं पूर्व्वपूर्व्वनाशान्नश्यती-

---

केनाभिप्रायेण तर्हि तावानित्युक्तमत आह। किं तर्हीति॥ न तस्य प्रतिमास्तीत्याकाशादि येन व्याप्तं लोकोऽनुभवति तस्मिन्नन्तरे सर्व्वं जगादि समाहितमित्यर्थः। कार्य्यकारणयोरतुल्यपरिमाणत्वमविरुद्धं नाकाशवन्महता ब्रह्मणोऽस्तीत्याह। तस्मादिति॥ आधाराधेययोरतुल्यपरिमाणत्वाच्चैवमित्याह। एतस्मिन्निति॥ इतस्याकाशस्य न स्वाभाविकं दहरत्वमित्याह। किन्त्विति॥ कार्य्यं हि द्यावापृथिव्यादिकारणे समाहितं तच्च हृदये ध्येयमित्यभिप्रेत्य बुद्ध्युपाधिविशिष्टमित्युक्तम्। आकाशे द्यावापृथिव्यादेः समाहितत्वे भूतविद्यासंवादं दर्शयति। यथा चेति॥ न विद्यते सर्व्वं यदस्मिन् समाहितमिति सम्बन्धः। वासितमहृदयस्थावस्थायामिहवक्तं व्याघर्षयति। नष्टमिति॥ आन्त्यमनायाद्दाभितमाहः स्यादिति व्याख्या-

स ब्रूयान्नास्य जरयैतज्जीर्य्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समा-

---

त्यभिप्रायः। एवं प्राप्ते नाशे किन्ततोऽन्यद्यथोक्तादवशिष्यतेऽवतिष्ठते न किञ्चनावतिष्ठत इत्यभिप्रायः। एवमन्तेवासिभिश्चोदितः स आचार्य्यो ब्रूयात् तन्मतिमपनयन्। कथमस्य देहस्य जरयैतद्यथोक्तमन्तराकाशाख्यं ब्रह्म यस्मिन् सर्व्वं समाहितं न जीर्य्यति देहवन्न क्षीयत इत्यर्थः। न चास्य वधेन शस्त्रादिघातेनैतद्धन्यते यथाकाशं किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेन्द्रियादिदोषैर्न स्पृश्यत इत्यर्थः। कथं देहेन्द्रियादिदोषैर्न स्पृश्यत इत्येतदस्मिन्नवसरे वक्तव्यं प्राप्तं तत्प्रकृतव्यासङ्गो माभूदिति नोच्यते। इन्द्रविरोचनाख्यायिकायामुपरिष्टाद्वक्ष्यामो युक्तितः। एतत्सत्यमवितथं ब्रह्मपुरं

---

मित्याशङ्कते। तञ्चेदिति॥ यस्मिन्नु सर्व्वं समाहितं ततो देहनाशे किमवशिष्यत इति सम्बन्धः॥ शिष्याणामधिकाबाधं दोषमाशङ्कते। कथमिति॥ शङ्कितं दोषं परिहरति। नैष दोष इति॥ सर्व्वं तदस्मिन्त्स-माहितमित्यत्रोक्तेन सर्व्वशब्देनेति शेषः॥ शिष्याणामधिकाबाधं दोषं परिहृत्य प्रकृतश्चोद्यं विवृणोति। यदेत्यादिना॥ आकाशस्य निष्प्रपञ्च-त्वमाशङ्क्याह। घटेति॥ ततो यथोक्ताकाशादिति सम्बन्धः। कथा पुना रोक्ता शून्यविषया निष्प्रतिरपरेवेति प्रश्नपूर्व्वकं विवृणोति। कथ-मित्यादिना॥ देहादिविक्रियया ब्रह्मणो न विक्रियास्तीत्येतत्कैमुतिक-न्यायेन साधयति। न चेति॥ देहादिषु प्रादात्म्येन स्थितस्यैहस्य दोषैरसंस्पृष्टमित्युक्तमित्याशङ्क्याह। कथमिति॥ प्रकृतहृदयविद्या तत्र व्यासङ्गो विक्षेपः। यदि देहादिदोषैरसंस्पृष्टत्वं ब्रह्मणो नोच्यते चेदेते

हिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः

---

ब्रह्मैव पुरं ब्रह्मपुरं शरीराख्यन्तु ब्रह्मपुरम्। ब्रह्मोपलब्ध्यर्थत्वात्। तत्स्वरूपमेव वाचारम्भणं विकारो नामधेयमिति श्रुतेः। तद्विकारेऽसतेऽपि देहपुरे ब्रह्मोपलभ्यत इति ब्रह्मपुरमित्युक्तं व्यावहारिकम्। सत्यन्तु ब्रह्मपुरमेतदेव ब्रह्म। सर्व्वव्यवहारास्पदत्वात्। अतोऽस्मिन् पुण्डरीकोपलक्षिते ब्रह्मपुरे सर्व्वे कामा ये बहिर्भवद्भिः प्रार्थ्यन्ते तेऽस्मिन्नेव स्वात्मनि समाहिताः। अतस्तत्प्राप्त्युपायमेवानुष्ठाता बाह्यकामविषयतृष्णां त्यजतेत्यभिप्रायः। एष आत्मा भवतां स्वरूपम्। शृणुत तस्य लक्षणम्। अपहतपाप्मा। अपहतः पाप्मा धर्म्माधर्म्माख्यो यस्य सोऽयमपहतपाप्मा। तथा विजरो विगतजरो विमृत्युश्च। तदुक्तं

---

च कश्चिदुपपद्यन्ते॥ तर्हि तदविवक्षितमेव स्यादित्याशङ्क्याह। एतदिति॥ कथं यथोक्तं ब्रह्मणः पुरमवितथं स्यादित्याशङ्क्याह। ब्रह्मैवेति॥ उभयशब्दसामानाधिकरण्यादुक्तसमासप्रसिद्धिरित्यर्थः॥ कथं तर्हि शरीरं ब्रह्मपुरमित्युक्तमत आह। शरीराख्यन्त्विति॥ व्याख्यातादिनोक्तेऽर्थे हेतुमाह। तत्रेति॥ तदेव स्फुटयितुं शरीरस्य मिथ्यात्वं प्रमाणं दर्शयति। तत्त्विति॥ अथ मिथ्याभूतस्य तस्य कथं ब्रह्मपुरत्वमत आह। तद्विकार इति॥ किञ्च व्यावहारिकं सत्यमिदं शरीरं तद्युक्तं तस्यान्तःस्थापि ब्रह्मोपलब्ध्यधिष्ठानस्य ब्रह्मपुरत्वमित्याह। व्यावहारिकमिति॥ ब्रह्म तु परमार्थसत्यमतस्तदेव सत्यमुख्यं ब्रह्मपुरमित्याह। सत्यन्त्विति॥ ब्रह्मणः सत्यत्वेऽपि पुरत्वायोगात्कुतो ब्रह्मपुरत्वमित्याशङ्क्याह। सर्व्वव्यवहारेति॥ दहराकाशस्यास्पदत्वं विनाशित्वमित्याशङ्क्य दोषं परि-

सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति
यथाऽनुशासनं यं यमन्तमभिकामा भवन्ति यं

---

पूर्व्वमेव न वधेनास्य हन्यते किमर्थं पुनरुच्यते । यद्यपि देहसम्बन्धिभ्यां जरामृत्युभ्यां न सम्बध्यते । अन्यथापि सम्बन्धस्ताभ्यां स्यादित्याशङ्कानिवृत्त्यर्थं विशोको विगतशोकः । शोको नामेष्टादिवियोगनिमित्तो मनसः सन्तापः । विजिघत्सो विगताशनेच्छः । अपिपासोऽपानेच्छः ॥ नन्वपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति । कारणप्रतिषेधात् । धर्म्माधर्म्मकार्य्या हि ते इति । जरादिप्रतिषेधेन वा धर्म्माधर्म्मयोः कार्य्याभावे विद्यमानयोरप्यसत्त्वमत्वमिति पृथक् प्रतिषेधोऽनर्थकः स्यात् । सत्यमेवं तथापि धर्म्मकार्य्यानन्दव्यतिरेकेण स्वाभाविकानन्दो यथेश्वरे विज्ञानमानन्दमिति श्रुतेः । तथा धर्म्मा-

---

हृत्स्वोपास्यत्वसिद्ध्यर्थं पातनिकां करोति । अत इति । अस्मिन् सर्व्वकामसमाधाने फलितमुपासनमुपदिशति । अतस्तदिति ॥ यथोक्ते दहराकाशे कीदृगुपासनं कर्त्तव्यमित्यपेक्षायामन्तर्हृदयेणेत्याह । एष इति ॥ पुनरुक्तिं शङ्कते । तदुक्तमिति ॥ तां परिहरति । यद्यपीति ॥ अन्यथा देहसम्बन्धं विना स्वभावतोऽपीत्यर्थः । निवृत्त्यर्थं पुनरुच्यत इति पूर्व्वेण सम्बन्धः ॥ प्रकारान्तरेण पुनरुक्तिं चोदयति । नन्विति॥ शोकस्यान्ताः किञ्चिज्जिघत्साय पिपासा येष्वस्ति ते शोकान्तास्तेषां जरादीनामपहतपाप्मत्वे न प्रतिषिद्धत्वे हेतुत्वमाह । कारणेति ॥ कथं धर्म्माधर्म्मप्रतिषेधे जरादिविकारप्रतिषेधस्तत्राह । धर्म्मेति ॥ इति पृथक् प्रतिषेधोऽनर्थः स्यादिति सम्बन्धः । जरादिप्रतिषेधे धर्म्मस्यार्थवत्त्वमङ्गीकृत्य प्रतिषेधस्य नैरर्थक्यमितिपर्या-

जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥
तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र

---

कार्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादित्याशङ्क्येत अतो युक्तस्यान्विष्टत्वे जरादीनां धर्माधर्माभ्यां पृथक् प्रतिषेधः। जरादिग्रहणं सर्वदुःखोपलक्षणार्थम्। पापनिमित्तानान्तु दुःखानामानन्त्यात्प्रत्येकं च तत्प्रतिषेधस्याशक्यत्वात्सर्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववचनम्। सत्या अवितथाः कामा यस्य सोऽयं सत्यकामः। वितथा हि संसारिणां कामाः। ईश्वरस्तु तद्विपरीतः। तथा कामहेतवः सङ्कल्पा अपि सत्या यस्य स सत्यसङ्कल्पः। सङ्कल्पः कामाश्च शुद्धसत्त्वोपाधिनिमित्ता ईश्वरस्य। चित्रगुवत्। न स्वतो नेति नेतीत्युक्तत्वात्। यथोक्तलक्षण एव आत्मा विज्ञेयः। गुरु-

---

न्तरमाह। जरादीति॥ धर्मादेर्जरादेश्च निषेधादितरनिषेधः सिद्धवदित्यङ्गीकरोति। सत्यमेवमिति॥ तर्हि किमित्यपहतपाप्मेत्युक्त्वा विजरो विमृत्युरित्याद्युच्यते तत्राह। तथापीति॥ तथापि दुःखे प्रतिषिद्धे किमिति जरादि प्रतिषिध्यते तत्राह। जरादीति॥ यत्तु कार्याभावे सतोरपि धर्माधर्मयोरन्तृत्वात्तदन्तोरगवदकिञ्चित्करत्वादपहतपाप्मेति न पृथग्वक्तव्यमिति तत्राह॥ पापनिमित्तानामिति॥ ईश्वरस्य सत्यकामत्वं साधयति। वितथा हीति॥ यथेश्वरस्याऽवितथाः कामास्तथा सङ्कल्पा अपीत्याह। तथेति॥ अभावरूपाणां धर्माणामद्वैताविद्यात्मकत्वेन कल्पितत्वेऽपि कथं भावरूपा धर्माः सम्भवेयुरित्यत आह। सङ्कल्पा इति॥ शुद्धसत्त्वं रजस्तमोभ्यामस्पृष्टं त्रिगुणाया मायाया अंशभूतं तदेवोपाधिस्तन्निमित्तं येषां ते तथा। अस्वाभाविकानां सङ्कल्पादीनामीश्वरविशेषणत्वे

पुण्यजितो लोकः क्षीयते तद्य इहात्मानमननु-
विद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु

---

भ्यः शास्त्रतत्त्वाप्रसंवेद्यतया स्वाराज्यकामैर्न चेष्यते को दोषः स्यादिति। शृणु तत्र दोषं दृष्टान्तेन। यथा ह्येवेह लोके प्रजा अन्वाविशन्ति अनुवर्त्तन्ते यथानुशासनम्। यथेह प्रजा अन्यस्वामिनं मन्यमानास्तस्य स्वामिनो यथा यथानुशासनं तथा तथान्वाविशन्ति॥ किं यं यमन्तं प्रत्यन्तं जनपदं क्षेत्रभागञ्चाभिकामा अर्थिन्यो भवन्त्यात्मबुद्ध्यनुरूपं तं तमेव च प्रत्यन्तादिमुपजीवन्तीति। एष दृष्टान्तो स्वातन्त्र्यदोषम्प्रति पुण्यफलोपभोगे। तथाऽन्यो दृष्टान्तस्तत्क्षयम्प्रति तद्यथेहेत्यादिः। तत्तत्रेह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः क्षीयते अन्तवान् भवति। अथेदानीं दार्ष्टान्तिकमुपसंहरति। एवमेवामुत्राग्निहोत्रादिपुण्यजितो लोकः पराधीनोप-

---

दृष्टान्तमाह। चित्रगुवदिति॥ यथा चित्रा गावोऽस्वाभाविकाश्चित्रगोर्देवदत्तस्य विधेयाः तथा ब्रह्मणोऽपि कामादय इत्यर्थः। किमिति कामादयो ब्रह्मण्यपि स्वाभाविका न भवन्ति। धर्मधर्मिणोरैक्योपचारादिह तद्गतेरुपपत्तेरित्याशङ्क्याह। न सत इति॥ वाक्यान्तरमवतारयितुं पातनिकां करोति। यथोक्तेति॥ ज्ञानप्रकारं निमित्ताधिकारिप्रवर्त्तनं तद्दर्शनपूर्वकं दर्शयति। गुहस्य इति॥ प्रश्नपूर्वकं यथा हीत्यादिवाक्यमाह। नयेदिति॥ यथा ऽऽकाशात्मा परिच्छिन्नमात्मेति पराक्रमत्वपरोक्षमर्थं यथाह्युपेक्षणेन दृष्टान्तेन

लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥ १ ॥

---

भोगः क्षीयत एवेति । उक्तो दोष एषामिति विषयं दर्शयति तद्य इत्यादिना । तत्तत्र इहास्मिन् लोके ज्ञानकर्म्मणो-रधिकृता योग्याः सन्त आत्मानं यथोक्तलक्षणं शास्त्राचार्य्योपदिष्टमननुविद्य यथोपदेशमनु स्वात्मसंवेद्यताम-कृत्वा व्रजन्ति देहादस्मात्प्रयन्ति । यत एतांश्च यथोक्तान् सत्यान् सत्यसङ्कल्पकार्य्यांश्च स्वात्मस्थान् कामाननुविद्य व्रजन्ति तेषां सर्व्वेषु लोकेष्वकामचारिताऽस्वतन्त्रता भवति । यथा राजाऽनुशासनानुवर्त्तिनीनां प्रजानामित्यर्थः । अथ येऽन्ये इहलोके आत्मानं शास्त्राचार्य्योपदेशमनुविद्य स्वात्मसम्वेद्यतामापाद्य व्रजन्ति यथोक्तांश्च सत्यान् का-मांस्तेषां सर्व्वेषु लोकेषु कामचारिता भवति राज्ञ इव सार्व्वभौमस्येह लोके ॥ १ ॥

---

दर्शयित्वा वाक्यार्थं कथयति । यथा ह्येवेति ॥ अस्यार्थं प्रश्नपूर्व्वकम-न्वाचष्टे । किमित्यादिना ॥ उक्तदृष्टान्तेन विवक्षितमंशमनूद्य दृष्टान्त-रस्य तात्पर्य्यमाह । एव इति ॥ केषामेव दोषो भवतीत्याकाङ्क्षायामाह । उक्त इति ॥ कर्म्मफलस्य पारतन्त्र्यं क्षयिष्णुत्वञ्च ज्ञानहीनकर्म्म-साध्यविषयमल्पोपभोगकानामेव दोषो भवतीत्युत्तरवाक्यमित्यर्थः ॥ अविदुषामेवास्वातन्त्र्यदोषमुक्त्वा विदुषां स्वातन्त्र्यफलं कथयति । अथेत्यादिना ॥ १ ॥

स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥१॥ अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥ २ ॥ अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ॥३ ॥ अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥ अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥

---

कथं सर्व्वेषु लोकेषु कामचारो भवतीत्युच्यते । य आत्मानं यथोक्तलक्षणं हृदि साक्षात्कृतवान् वक्ष्यमाणब्रह्मचर्य्यादिसाधनसम्पन्नः सन् तत्स्थांश्च सत्यान् कामान् स त्यक्तदेहः । यदि पितृलोककामः पितरो जनयितारस्त एव सुखहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते तेषु कामो यस्य तैः पितृभिः सम्बन्धेच्छा यस्य सङ्कल्पमात्रादेव पितरः समुत्तिष्ठन्ति आत्मसम्बन्धितामापद्यन्ते शुद्धसत्त्वतया सत्यसङ्कल्पत्वादीश्वरस्येव तेन पितृलोकेन भोगेन सम्पन्नः

---

कामचाराकाङ्क्षापूर्व्वकमुपपादयति । कथमित्यादिना ॥ तत्र-

अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥ अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते ॥ ७ ॥ अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥ ८ ॥ अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥ यं यमन्तमभिकामो भवति यं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥ २ ॥

---

सम्पत्तिरिष्टप्राप्तिस्तया सम्पन्नो महीयते पूज्यते वर्द्धते वा महिमानमनुभवति । समानमन्यत् । मातरो जनयित्र्योऽतीताः सुखहेतुभूताः सामर्थ्यात् ॥ न हि दुःखहेतुभूतासु ग्रामसूकरादिजन्मनिमित्तासु मातृषु विमुक्तबन्धनस्य योगिन इच्छा तत्सम्बन्धो वा युक्तः । यं यमन्तं प्रदेशमभिकामो भवति । यं यं कामं कामयते यथोक्तव्यतिरेकेणापि सोऽस्यान्तः प्राप्तुमिष्टः । कामश्च सङ्कल्पा-

---

हेतुभूता इति कुतो विशेषणमित्याशङ्क्याह । सामर्थ्यादिति ॥ तदेव

**त इमे सत्याः कामा अनृतापिधानास्तेषाᳫ सत्यानाᳫ सतामनृतमपिधानं यो यो ह्यस्येतः**

देव समुत्तिष्ठति यस्य । तेनेच्छाऽविघाततथाऽभिप्रेतार्थप्राप्त्या तत्सम्पन्नो मन्यीयत इत्याद्युक्तार्थम् ॥ २ ॥

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साहजननार्थमनुक्रोशयन्नाह । कष्टमिदं खलु वर्त्तते यत्स्वात्मस्थाः स्वयप्राप्ता अपि ते इमे सत्याः कामा अनृतापिधानास्तेषामात्मस्थानां स्वाश्रयाणामेव सतामनृतं बाह्यविषयेषु स्त्र्यन्नभोजनादिषु तृष्णा तन्निमित्तश्च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते । तन्निमित्तं सत्यानां कामानामप्राप्तिरित्यपिधानमिवापिधानम् । कथमनृतापिधाननिमित्तं तेषामलाभ इत्युच्यते । यो यो हि यस्मादस्य जन्तोः पुत्त्रो भ्राता वा इष्ट इतोऽस्मा-

---

स्फुटयति । नशीति ॥ तेन ज्ञानकाङ्क्षात्मेऽनेति यावत् ॥ २॥

त इमे सत्याः कामा इत्यादेस्तात्पर्यमाह । यथोक्तेति ॥ आह समनन्तरा श्रुतिरिति शेषः॥ तमेवानुक्रोशं दर्शयति । कष्टमिति॥ अनृतमपिधानमिवापिधानं तेषामिति सम्बन्धः । किन्तदनृतं तदाह ॥ बाह्येति कथं तदपिधानमात्मस्थानां कामानामित्याशङ्क्याह । तन्निमित्तमिति ॥ उक्तमर्थमाकाङ्क्षापूर्वकमुत्तरं वाक्यमवतार्थोपपादयति । कथमित्यादिना ॥ तं हृदयाकाशे स्वात्मनि सन्तमपि इष्टमिच्छन्नपि यस्मान्न लभते तस्मात्तदनृतापिधानं निमित्तं कृत्वा तदलाभो भवतीति योजना । इतश्च तेषामलाभे निमित्तमनृतापिधानमेवेत्याह । अथ पुनरिति ॥ यथोक्तेन विधिनेत्युपाप्तिप्रकारोक्तिः ॥ आत्मस्थानां कामानामनृतापिधानत्वमुक्तं निगमयति । अत इति ॥ यस्मादविद्वद्भिरलभ्या विद्वद्भिश्च लभ्याः कामाः सर्वाधारे

प्रैति न तमिह दर्शनाय लभते ॥ १ ॥ अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं

---

लोकात्प्रैति प्रगच्छति म्रियते तमिह पुत्रं भ्रातरं वा स्वहृदयाकाशे विद्यमानमपीह पुनर्दर्शनायेच्छन्नपि न लभते। अथ पुनर्ये चास्य विदुषो जन्तोर्जीवा जीवन्तीह पुत्रा भ्रात्रादयो ये च प्रेता मृता इष्टाः सम्बन्धिनो यच्चान्यदिह लोके वस्त्रान्नपानादि वा वस्त्विच्छन्न लभते तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना विन्दते लभते। अत्रास्मिन्हार्दाकाशे हि यस्मादस्यैते यथोक्ताः सत्याः कामा वर्त्तन्तेऽनृतापिधानाः॥ कथमिव। तदन्यायमित्युच्यते। तत्तत्र यथा हिरण्यमेव पुनर्ग्रहणाय निधातृभिर्निधीयत इति निधिस्तं हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञा निधिं शास्त्रै-

---

जगन्मूलकारणे ब्रह्मणि स्वात्मभूते वर्त्तन्ते तस्मात्ते भवन्त्यनृतापिधानाः॥ सत्यानविद्यावानुपलम्भात्। प्रयत्ने चोपलम्भादित्यर्थः। यदुक्तं ब्रह्मणि स्वात्मनि कामाः सन्तोऽपि नोपलभ्यन्त इत्यन्यायमिति तत्र दृष्टान्तं प्रश्नपूर्वकमुत्थाप्य व्याचष्टे। कथमित्यादिना। तत्र स्वायत्तस्याप्यप्राप्तौ दृष्टान्तो निर्दिश्यत इति शेषः। दार्ष्टान्तिकं व्याकरोति। एवमेवेति॥ यथाप्रकारमभिनयति। एषोऽहमिति॥ तत्र हेतुमाह। अनृतेनेति॥ यथोक्तेन मिथ्याज्ञानप्रवर्तितानाद्यनिर्वाच्याज्ञानगतेन तृष्णाप्रभेदेन तन्निमित्तेनेच्छाप्रचारेणेत्यर्थः। तस्यात्मजानां स्वात्मभूतब्रह्मलोकालाभ इति शेषः॥ स्वरूपादनृतेनापहृतत्वमेव स्फोरयति। अविद्यादीति॥ प्रकृतमात्मलोकमुपसंहरति। अत इति॥ अनुक्तोपचारा यथोक्तमब्रह्मा-

तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरे-

---

निधिं क्षेत्रमजानन्तस्ते निधेरुपर्युपरि सञ्चरन्तोऽपि निधिं न विन्देयुः शक्यवेदनमपि। एवमेव इमा अविद्यावत्यः सर्व्वा इमाः प्रजा यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं ब्रह्मैव लोकस्तमहरहः प्रत्यहं गच्छन्त्योऽपि सुषुप्तकाले न विन्दन्ति न लभन्ते एषोऽहं ब्रह्मलोकभावमापन्नोऽस्माद्येति। अनृतेन हि यथोक्तेन हि यस्मात्प्रत्यूढा हृताः स्वात्मस्वरूपात् अविद्यादिदोषैर्बहिरपकृष्टा इत्यर्थः। अतः कष्टमिदं वर्त्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यत इत्यभिप्रायः। स वा एष आत्मापहतपाप्मेति प्रकृतो वैशब्देन तं स्मारयति। एष विवक्षित

---

नानुष्ठाने प्रयत्नस्य कर्त्तव्यतोक्ता। सम्प्रति नामाद इव हृदये ब्रह्मदृष्ट्या-रोपमात्रमिति शङ्कां वारयितुमनन्तरवाक्यमवतार्य व्याकरोति। स वा इत्यादिना॥ कथमात्मा यथोक्तो हृदयेऽस्तीति गम्यते तत्राह। तस्येति॥ यथोक्तावगतिफलमाह। अहरहरिति॥ एवंविदिति विशेषणमनन्य-माव: शङ्कते। नन्विति॥ अनेवंविदोऽपि सुषुप्तिकाले ब्रह्मप्राप्तिमङ्गीकरोति। बाढमेवेति॥ तर्हि किमित्येवंविदिति विशेषणमित्याशङ्क्याह। तथापीति॥ विद्वदविदुषोर्विशेषमेवं दृष्टान्तेन दर्शयति। यथापीति॥ त्वं तदसीत्याचार्येण प्रतिबोधितो विद्वान् सदेव भवत्यन्यस्त्वविद्वानज्ञोऽपि देहादिकमेव जानन् सदेव भवतीति योजना। देहपातेऽपीत्यपिशब्देन जीवदवस्था दृष्टान्तिता। सम्प्रसादस्य विदुषो सम्प्राप्तव्यं पदं ब्रह्म

यत्रैतमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥ स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृदय-

---

आत्मा हृदि हृदयपुण्डरीके आकाशशब्देनाभिहितः। तस्यैतस्य हृदयस्यैतदेव निरुक्तं निर्वचनं नान्यत्। हृदयमात्मा वर्त्तत इति यस्मात्तस्माद्धृदयनामनिर्वचनप्रसिद्धापि स्वहृदये आत्मेत्यवगन्तव्यमित्यभिप्रायः। अहरहर्वै प्रत्यहमेवंवित् हृद्यमात्मेति जानन् स्वर्गं लोकं हार्दं ब्रह्मैति प्रतिपद्यते। नन्वेवंविदपि सुषुप्तिकाले सता सोम्य तदा सम्पन्न इत्युक्तत्वात्। बाढमेवं तथाप्यस्ति विशेषः। यथा जानन्नजानंश्च सर्व्वो जन्तुः सद्ब्रह्मैव तथापि तत्त्वमसीति प्रतिबोधितो विद्वान् सदेव नान्योऽस्मीति जानन् सदेव भवति। एवमेव विद्वानविद्वांश्च सुषुप्तौ

---

तत्तादात्म्योपदेशेनोपास्यं स्तोतुं सम्प्रसादशब्दार्थं कथयति। सुषुप्ते इति॥ सम्यक्प्रसीदतीति सम्प्रसादो विद्वानिति शेषः। स्वाभाविकमेवात्मनः स्वास्थ्यं कथं सुषुप्ते प्रसीदतीति विशेष्यते। तत्राह। आप्यदिति॥ अज्ञातीति सुषुप्तः पुरुषः सम्प्रसाद इति विशेषः। व्युत्पत्तिबलेन सम्प्रसादशब्दः सौषुप्तसर्व्वजीवसाधारण्यस्तत्कथमेष सम्प्रसाद इति सन्निहितविद्वत्परामर्शं तत्राह। सम्प्रसादशब्द इति॥ तस्य सौषुप्तसर्व्वजीवसाधारण्येऽपि प्रक्रमवशाद्विद्वानेवैष प्रकृतः सम्प्रसाद इति व्यपदिश्यते। यथा सन्निहितार्थो यत्नविशेषादेष इतिशब्दवशादुच्यते तथेहापीत्यर्थः। य एष एवंवित्प्रकृतः सम्प्रसादः स विद्वानिति यावत्। विवेकानन्तर्य्येण-यशब्दार्थः॥ समुत्थानशब्दस्य मुख्यार्थत्वं वारयति। नत्विति॥ देहादुत्थितस्यापि स्वेन रूपेणाभिनिष्पत्तिर्भविष्यतीत्याशङ्क्याह। न हीति॥

मिति तस्मादहरहर्वा एवंवित्स्वर्गं लोक-
मेति ॥ ३॥ अथ य एष सम्प्रसादोऽस्माच्छरीरा-
त्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणा-

---

यद्यपि सत्सम्पद्यते तथाप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते। देहपातेऽपि विद्याफलस्यावश्यम्भावित्वादित्येष विशेषः। सुषुप्तकाले स्वेनात्मना सता सम्पन्नः सन् सम्यक् प्रसीदतीति जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति। सम्प्रसादशब्दो यद्यपि सर्व्वजन्तूनां साधारणस्तथाप्येवंवित्स्वर्गं लोकमेतीति प्रकृतत्वादेष सम्प्रसाद इति सन्निहितवत्। यत्नविशेषात्। सोऽथेदं शरीरं हित्वाऽस्माच्छरीरात्समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः न त्वासनादिवत्समुत्थायेति इह युक्तम्। स्वेन रूपेणेति विशेषणात्। न ह्यन्यत उत्थाय स्वंरूपं सम्पत्तव्यम्। स्वरूपमेव हि तन्न भवति। प्रतिपत्तव्यं चेत्स्यात्परं परमात्मलक्षणं विज्ञप्ति-

---

कुतोऽयं स्वरूपेऽभिनिष्पत्तिप्रयोगस्तत्राह। प्रागिति॥ एतच्छब्दःसम्यग्ज्ञानविषयः। अनात्मस्वरूपप्रतिपत्तिभ्रान्तिनिवृत्त्यपेक्षया स्वरूपसम्पत्तिरुपचरितेत्यर्थः॥ किन्तत्स्वरूपमिति तदाह। अशरीरता हीति॥ यथा मिथ्यारूप्यतादात्म्यनिवृत्तौ स्वाभाविकेनारूप्यात्मना शुक्तिरवतिष्ठते। तथा शरीरतादात्म्यभ्रान्तिनिवृत्तौ तदभावोपलक्षितं स्वकं स्वरूपमेवावस्थितं भवतीत्यर्थः॥ एष आत्मेति होवाचेत्यत्र एषशब्दार्थमाह। यत्स्वमिति॥ कोऽसावुक्तिकर्त्तेत्याकाङ्क्षायामाह। स ब्रूयादिति॥ न केवलमात्मत्वमेव प्रकृतस्य ज्योतिषः किन्तु रूपान्तरत्वमस्तीत्याह। किञ्चेति॥ अविनाशित्वे हेतुमाह। भूमेति। तथापि कथमविनाशित्वं तत्राह। यो

भिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥४॥ तानि ह वा एतानि त्रीण्यक्षराणि

---

स्वभावं ज्योतीरूपं सम्पद्य स्वास्थ्यमुपगच्छतीति। एतत्स्वेनात्मीयेन रूपेणाभिनिष्पद्यते प्रागेतस्याः स्वरूपसम्पत्तेः। अविद्यया देहमेवापरं रूपमात्मत्वेनोपगत इति तदपेक्षयेदमुच्यते स्वेन रूपेणेति। अशरीरता ह्यात्मनः स्वरूपं यत्स्वं परं ज्योतिःस्वरूपमापद्यते सम्प्रसाद एष आत्मेति होवाच। स ब्रूयादिति यः श्रुत्या नियुक्तोऽन्तेवासिभ्यः। किञ्चैतदमृतमविनाशि। भूमा यो वै सोऽमृतमित्युक्तमत एवाभयं भूम्नो द्वितीयाभावादत एव ब्रह्मेति। तस्य ह वै एतस्य ब्रह्मणो नामाभिधानम्। किन्तत्सत्यमिति। तत्सत्यं ह्यवितथम्। तत्सत्यं स आत्मेति ह्युक्तम्। अथ किमर्थमिदं नाम पुनः पुनरुच्यते तदुपासनविधि-

---

वा इति॥ इतिशब्दो हेत्वर्थः। यस्मादयोक्तलक्षणं ब्रह्म तस्मादुपासनार्हतीत्यर्थः॥ उपास्यस्य ब्रह्मणो नाम निर्दिशति। तस्येति। उक्तस्य पुनरुक्तिरनर्थिकेत्याशङ्क्य परिहरति। किमर्थमित्यादिना॥ उपास्यस्तुत्यर्थं नामोक्त्वा तदर्थमेव नामाक्षराणि प्रस्तौति। तानीति॥ तानि त्रीणीत्यमेवाध्यायमाह। एतानीति। कथं सकार इत्युच्यते। इकारस्यापि तत्र भावादित्याशङ्क्याह। इकार इति॥ तत्र हेतुमाह। ह्रस्वेनेति॥ दीर्घमीकारवर्जितस्य ह्रस्वं इकारवदत्र विवक्षितत्वमेव नामाक्षरेषु तस्य रूपवतीत्यर्थः॥ तथाप्यक्षराणामर्थान्तरेणेदं दर्शयति। तेषामिति॥

सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्य-महरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥ ३ ॥

---

स्तुत्यर्थम् । तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति सकारस्तकारो यमिति च । ईकारस्तकारे उच्चारणार्थोऽनुबन्धः । ह्रस्वेनैवाक्षरेण पुनः प्रतिनिर्देशात्तेषाम् । तत्र यत्सत्सकारस्तदमृतं सद्ब्रह्म । अमृतवाचकत्वादमृत एव सकारस्तकारान्तो निर्दिष्टः । अथ यत्तकारस्तन्मर्त्यम् । अथ यद्यमक्षरं तेनाक्षरेणामृतं मर्त्याख्ये पूर्वे उभे अक्षरे यच्छति यमयति नियमयति वशीकरोति आत्मनेत्यर्थः । यद्यस्मादनेन यमित्येतेनोभे यच्छति । तस्माद्यमादौ संयत इव हि एतेन यमा लक्ष्यते । ब्रह्मनामाक्षरस्यापि इदममृतत्वादिधर्मवत्त्वं महाभाग्यम् । किमुत नामवत इत्युपास्यत्वाय स्तूयते ब्रह्म-

---

निर्द्धारणे षष्ठी ॥ वर्णविभागमन्तर्यमयशब्दार्थः। तकारस्याक्षरस्याम.न्या-न्वर्थ्यत्वम् । कथमक्षरेऽपूर्व्वेऽयमित्यक्षरेण प्रयोक्ता नियम्यतीत्याकाङ्क्षायां नियमनस्वाभाव्येनेत्याह । आत्मनेति ॥ यमित्यक्षरस्य नियमनस्वाभाव्यमेव साधयति । यद्यस्मादिति ॥ तस्य तत्स्वभावत्वे अनुभवमनुग्राहकं सूचयति । संयत इवेति ॥ यमो यमित्यक्षरेणोक्तोऽर्थः । तस्य पूर्वाभ्यामुपरिस्थायित्वं तन्नियामकत्वं हेतुरिति मत्वाह । एतेनेति ॥ अमृतेऽपूर्व्वे अक्षरे इति शेषः ॥ ब्रह्मणः सत्यमिति नाम तस्य वर्णविभजनं कृतं तस्य प्रयोजनमाह । ब्रह्मेति ॥ फलवाक्यस्थमेवंविदित्यदं व्याकरोति । एवमिति ॥ वाक्यन्तु

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ

---

नामनिर्वचनेनैवं नामवतो वेत्ता एवंवित् । अहरहर्वा एवंवित्स्वर्गं लोकमेतीत्युक्तार्थम् ॥ ३ ॥

अथ य आत्मेति । उक्तलक्षणो यः सम्प्रसादस्तस्य स्वरूपं वक्ष्यमाणैरुक्तैरनुक्तैश्च गुणैः पुनःस्तूयते । ब्रह्मचर्यसाधनसम्बन्धार्थम् । य एष यथोक्तलक्षण आत्मा स सेतुरिव सेतुः । विधृतिर्विधरणः । अनेन हि सर्वं जगद्वर्णाश्रमादिक्रियाकारकफलादिभेदनियमैः कर्तुरनुरूपं विदधता विधृतम् । अध्रियमाणं ह्यीश्वरेणेदं विश्वं विनश्येत यतस्तस्मात्स सेतुर्विधृतिः । किमर्थं स सेतुरित्याह । एषां भूरादीनां लोकानां कर्तृकर्मफलाश्रयाणामसम्भेदायाविदारणायाविनाशायेत्येतत् । किंविशिष्टश्चासौ सेतुरित्याह । नैनं सेतुमात्मानमहोरात्रे सर्वस्य जनिमतः परिच्छेदके सती नैतं तरतः । यथाऽन्ये संसा-

---

न व्याख्येयं प्रागेव व्याख्यातत्वादित्याह । अहरिति ॥ ३ ॥

वाक्यान्तरमादत्ते । अथेति ॥ तस्य तात्पर्यमाह । उक्तलक्षण इति ॥ प्रकारान्तरेण स्तुतिप्रारम्भार्थो वाक्यस्थोऽथशब्दः ॥ किमिति स्तुतिरित्यपेक्षायां स्तुते ब्रह्मण्याधारे ब्रह्मचर्याख्यस्य साधनस्य सम्बन्धविधानार्थमित्याह । ब्रह्मचर्येति ॥ यथा मृदादिमयः सेतुर्व्यवस्थाहेतुरस्येदं क्षेत्रमिति । तथायमपि व्यवस्थाहेतुरित्याह । सेतुरिवेति । सेतुत्वं साधयति । विधृतिरिति ॥

सर्व्वे पाप्मानोऽतो निवर्त्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकस्तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्न-

रिव: कालेनाहोरात्रादिलक्षणेन परिच्छेद्या न तथायं कालपरिच्छेद्य इत्यभिप्राय:। यस्मादर्वाक् संवत्सरोऽहोभि: परिवर्त्तत इति श्रुत्यन्तरात्। अत एवैनं न जरा तरति न प्राप्नोति। न तथा मृत्युर्न तु शोको न सुकृतं न दुष्कृतम्। सुकृतदुष्कृते धर्म्माधर्म्मौ। प्राप्तिरत्र तरतिशब्देनाभिप्रेतो नातिक्रमणम्। कारणं ह्यात्मा। न शक्यं हि कारणातिक्रमणं कर्तुं कार्य्येण। अहोरात्रादि च सर्वं सत: कार्य्यम्। अन्येन ह्यन्यस्य प्राप्तिरतिक्रमणं वा क्रियेत। नतु तेनैव तस्य। न हि घटेन मृत्प्राप्यतेऽतिक्रम्यते वा। यद्यपि पूर्वं य आत्मापहतपाप्मेत्यादिना पाप्मादिप्रतिषेध उक्त एव तथापीहायं विशेषो न तरतीति प्राप्तिविषयत्वं

---

विधारकत्वमुपपादयति। अनेनेति॥ वर्णाश्रमादीत्यादिशब्दो वयोऽवस्था-विषय:। फलादीत्यादिशब्दस्तु तदवान्तरजातीयविषय: कर्म्मानुरूपक्रिया दिभेदविषयनियमै: सवर्णादि व्यवस्थापयता परमेश्वरेण सर्वं जगद्विधृत मिति सम्बन्ध:॥ अन्वयमुखेनोक्तमेव व्यतिरेकमुखेनाह। अभिद्यमानो हीति॥ उक्तमेवार्थं प्रश्नपूर्व्वकं विशदयति। किमर्थमित्यादिना॥ नैतमिति प्रतीकमुपादाय व्याचष्टे। सेतुरित्यादिना॥ तदेव वैधर्म्म्य-दृष्टान्तेन स्फुटयति। यथेत्यादिना॥ परमात्मनो न कालपरिच्छेद्य-त्वमित्यत्रार्थवतीं श्रुतिं प्रमाणयति। यस्मादिति॥ तरतीति तरतेरति-क्रमणार्थो नात्मनि सम्भवतीत्यत्र हेतुमाह। कारणं हीति। कार्य्येण कारणातिक्रमणं माभूदहोरात्रादेस्त्वात्मातिक्रमणं किं न स्यादित्याश-

यि महामहस्यामिनिष्पद्यते सदाविभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥ तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्य्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाᳫ सर्व्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ ४ ॥

---

कारूपं विदुषः सम्पद्यत इत्यर्थः । सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेणैव ब्रह्मलोकः । तत्रैवं सत्येतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्य्येण स्त्रीविषयतृष्णात्यागेन शास्त्राचार्य्योपदेशमनुविन्दन्ति स्वात्मसंवेद्यतामापादयन्ति एतेषामेव ब्रह्मचर्य्यसाधनवतां ब्रह्मविदामेष ब्रह्मलोकः । नान्येषां स्त्रीविषयसम्पर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां सर्व्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात्परममेतत्साधनं ब्रह्मचर्य्यं ब्रह्मविदामित्यभिप्रायः ॥ ४ ॥

---

तेऽनत्स्वरूपता विदुषो यथोक्तस्वरूपत्वमविरुद्धमित्यर्थः ॥ विद्याफले यथोक्ते ब्रह्मलोके व्यवस्थिते सत्येतत्फलं विद्यावत्त्वेन केषां [illegible] । तत्रेति ॥ ब्रह्मचर्यवतां विद्याद्वारा ब्रह्माख्यो लोकः फलमित्यर्थः ॥ तेषामेवेत्येवकारस्तत्र [illegible] । नान्येषामिति ॥ ब्रह्मविदामपीति [illegible] । तेषां ब्रह्मचर्यवतां ब्रह्मविदामिति यावत् [illegible] ब्रह्मचर्यसाधनवतामेव [illegible] ब्रह्माख्यो लोको भवतीति [illegible] । तस्मादिति ॥ साधनं ब्रह्मविद्यावतामिति शेषः । [illegible] ॥ ४ ॥

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वा-

---

य आत्मा स वेत्तृत्वादिगुणैः श्रुतस्तत्प्राप्तये ज्ञानसहकारिसाधनान्तरं ब्रह्मचर्याख्यं विधातव्यमित्याह । यज्ञादिभिः तत् स्तौति कर्त्तव्यार्थम् । अथ यद्यज्ञ इत्याचक्षते लोके परमपुरुषार्थसाधनं कथयन्ति शिष्टास्तद्ब्रह्मचर्य्यमेव । यज्ञस्यापि यत्फलं तद्ब्रह्मचर्य्यवाँल्लभतेऽतो यज्ञोऽपि ब्रह्मचर्य्यमेवेति प्रतिपत्तव्यम् । कथं ब्रह्मचर्य्यं यज्ञ इत्याह । ब्रह्मचर्य्येणैव हि यस्माद्यो ज्ञाता स तं ब्रह्मलोकं यज्ञस्यापि पारम्पर्य्येण फलभूतं विन्दते लभते ततो यज्ञोऽपि ब्रह्मचर्य्यमेवेति । यो ज्ञातेत्यक्षरानुवृत्तेर्यज्ञो ब्रह्मचर्य्यमेव । अथ यदिष्टमित्याचक्षते ब्रह्मचर्य्यमेव तत् । कथं ब्रह्मचर्य्येणैव साधनेन तमीश्वरमिष्ट्वा पूजयित्वा अथ वैषणामात्मविषयां कृत्वा तमात्मानमनुविन्दते । एषणादिष्ट-

---

अथ यथोक्तपरमात्मप्राप्तिसाधने ज्ञाने सहकारिब्रह्मचर्यं प्रागेवोक्तम् ॥ तथाच कृतं ब्रह्मचर्यविधिशेषस्तवनेनेत्याशङ्क्याह । य आत्मेति ॥ यज्ञाद्यपेक्षया अन्तरशब्दः । उक्तमपि ब्रह्मचर्यं विधातव्यमनन्तरप्रवृत्तिरित्यर्थः ॥ किमिति तर्हि तस्य स्तुतिरित्याशङ्क्य तस्या विधिशेषत्वं दर्शयति । यज्ञादिभिरिति ॥ स्तुतिराकाङ्क्षोत्तरं वाक्यमित्युक्तं तदादाय व्याकरोति । अथेत्यादिना ॥ ब्रह्मचर्यस्तोत्रार्थत्वा विधिसिद्धत्वे तदीयस्तुतिमात्रत्वार्थोऽयशब्दः ॥ यज्ञस्य ब्रह्मचर्ये ऽन्तर्भावं साधयति । यज्ञस्यापीति ॥ उक्तमेवार्थमाकाङ्क्षाद्वारा प्रपञ्चयति । कथमित्यादिना ॥

त्मानमनुविन्दते ॥ १ ॥ अथ यत्सत्त्रायणमित्याच-क्षते ब्रह्मचर्य्यमेव तद्ब्रह्मचर्य्येण ह्येव सत आत्मन-स्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्य्य-

---

मपि ब्रह्मचर्य्यमेव। अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मच-र्य्यमेव तत्तथा। सतः परस्मादात्मन आत्मनस्त्राणं रक्षणं ब्रह्मचर्य्यसाधनेन विन्दते अतः सत्त्रायणशब्दमपि ब्रह्मच-र्य्यमेव तत्। अथ यन्मौनमित्याचक्षते ब्रह्मचर्य्यमेव तद्ब्रह्म-चर्य्येणैव साधनेन युक्तः सन्नात्मानं शास्त्राचार्य्याभ्यामनुविद्य पश्चान्मनुते ध्यायति। अतो मौनशब्दमपि ब्रह्मचर्य्यमेव। अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्य्यमेव तत्। यमात्मानं ब्रह्मचर्य्येणानुविन्दते स एष हि आत्मा ब्रह्मचर्य्यसाधन-वतो न नश्यति तस्मादनाशकायनमपि ब्रह्मचर्य्यमेव। अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्य्यमेव तत्। अरण्यशब्दयो-रर्णवयोर्ब्रह्मचर्य्यवतोऽयनादरण्यायनं ब्रह्मचर्य्यम्। यो ज्ञाना-द्यज्ञः। एषणादिष्टम्। सतस्त्राणात्सत्त्रायणम्। मननान्मौनम्। अनाशनादनाशकायनम्। अरण्ययोर्गमनादरण्यायनम्।

---

पारम्पर्य्येण चित्तशुद्धिद्वारेणेत्यर्थः। न केवलं फलद्वारा यज्ञो ब्रह्मचर्य्ये-ऽन्तर्भवति। किन्तु यकारज्ञकारसंसर्गादपीत्याह। यो ज्ञातेति॥ इष्टस्य ब्रह्मचर्य्यान्तर्भावमःकाक्षाद्वारा स्फोरयति। इष्ट्वेत्यादिना॥ पूजयित्वा तमात्मानमनुविन्दत इति सम्बन्धः॥ ब्रह्मचर्य्येणात्मविषयैषणा निष्पाद्यते। इष्टेनापि तदेव सम्पाद्यते। तस्मादेषणाद्गुणवत्त्वात्स्वरूपा-दिष्टमपि वस्तुतो ब्रह्मचर्य्यमेवेत्याह। एषणादीति॥ बहुयजमानकं वैदिकं कर्म्म सत्त्रायणम्। तथा सर्वविदितमित्यर्थः॥ कथं सत्त्रायणं

यरश्चाख्यावर्णौ ब्रह्मचर्य्येण साधनेनानुविन्दन्ति ये तेषा-मेव यो व्याख्यातो ब्रह्मलोकस्तेषाञ्च ब्रह्मचर्य्यसाधनवतां ब्रह्मविदां सर्व्वेषु लोकेषु कामचारो भवति नान्येषाम-ब्रह्मचर्य्यपराणां बाह्यविषयासक्तबुद्धीनां कदापीत्यर्थः। नन्वत्र त्वमिन्द्रस्त्वं यमस्त्वं वरुण इत्यादिभिर्यथा कश्चित् स्तूयते महार्हः। एवमिष्टादिभिः शब्दैर्न स्त्रीविषयतृष्णा-निवृत्तिमात्रं स्तुत्यर्हं किन्तर्हि ज्ञानस्य मोक्षसाधन-त्वात्तद्देवेष्टादिभिः स्तूयत इति केचित्। न स्त्र्यादि बाह्यविषयतृष्णापहृतचित्तानां प्रत्यगात्मविवेकविज्ञाना-नुपपत्तेः। पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्नित्यादिश्रुतिस्मृतिशतेभ्यः। ज्ञान-

---

ष्टतौ स्तुतिरयुक्ता। तद्ब्रह्मचर्य्येण ज्ञानमुपलक्ष्य तदेव स्तूयत इति मतमुत्थापयति। नन्वत्रेति॥ तस्य क्षुद्रसाधनत्वमभिप्रेत्य दुरलुब्धत्वात्। तद्व्यतिरेकेण ज्ञानासम्भवान्नैतदुत्तरमाह। नेत्यादिना॥ विषयाप-हृतचित्तानां नराणां विवेकासम्भवे प्रमाणमाह। पराञ्चीति॥ ध्यायतो विषयानित्याद्या स्मृतिरत्र विवक्षिता॥ ब्रह्मचर्य्यस्योत्तमसाधनत्वे सिद्धे फलितमाह। ज्ञानेति॥ ब्रह्मलोकप्राप्तिसाधनस्य ब्रह्मचर्य्यस्य यज्ञादिभिः स्तुतत्वात्तेषामपि तत्प्राप्तिसाधनत्वं श्रुत्याऽभिप्रेतमिति शङ्कते। नन्विति॥ किन्तेषां पुरुषार्थसाधनत्वं प्रस्तुतश्रुत्या प्रतीतं किंवा ब्रह्म-लोकसाधनत्वमिति विकल्पमाद्यमङ्गीकरोति सत्यमिति॥ न द्वितीयो वाक्यभेदप्रसङ्गादित्याह। न त्विति॥ कथं तर्हि यज्ञादिब्रह्मचर्य्यस्तु-तिरित्याह। किन्त्विति॥ उक्तमर्थं दृष्टान्तेन स्फुटयति। यथेति॥

सहकारिकारणं स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं विधातव्यमेवेति युक्तैव तत्स्तुतिः। ननु च यज्ञादिभिः स्तुतं ब्रह्मचर्य्यमिति यज्ञादीनां पुरुषार्थसाधनत्वं गम्यते। सत्यं गम्यते। नत्विह ब्रह्मलोकं प्रति यज्ञादीनां साधनत्वमभिप्रेत्य यज्ञादिभिर्ब्रह्मचर्य्यं स्तूयते किन्तर्हि तेषां प्रसिद्धपुरुषार्थसाधनत्वमपेक्ष्य यथेन्द्रियादिभी राजा न तु यत्रेन्द्रादीनां व्यापारस्तत्रैव राज्ञ इति तद्वत्। य इमे अर्णवादयो ब्राह्मलौकिकाः सङ्कल्पजाश्च पित्रादयो भोगास्ते किं पार्थिवा आप्याश्च। यथेह लोके दृश्यन्ते तद्वदर्णवहृदपूःस्वर्णमण्डपानि आहोस्विन्मानसप्रत्ययमात्राणीति। किञ्चातो यदि पार्थिवा आप्याश्च स्थूलाः स्थू-

---

त्वमिन्द्रस्त्वं विष्णुरित्यादिना विप्रादिभी राजा स्तूयते तथापि न तस्येन्द्रादिव्यापारे निरङ्कुशं कर्तृत्वमस्तीति यथेष्यते तथा यज्ञादिभिर्ब्रह्मचर्यस्य स्तुतस्यापि नास्ति तुल्यफलत्वमित्यर्थः॥ ब्रह्मलोकस्यार्णवादिपदार्थनिर्णयं विचारमवतारयन्नादौ तद्विषयमाह। य इम इति॥ तत्रैकं पक्षमुत्थाप्य दृष्टान्तेन तदुचितप्रकारमाह। ते किमिति॥ पक्षान्तरं सदृष्टान्तमाह॥ आहोस्विदिति॥ कस्मिन्पक्षे को लाभः को वा दोषः॥ दोषदर्शनाद्याद्यपक्षेण स्थौल्ये च पुराणानुपपत्तिवाक्येन मानसत्वमेवेत्याह। यदीति॥ न केवलं तेषां स्थौल्ये शास्त्रभेदविच्छित्त्यादिश्रुत्या पुराणश्रुत्या च विरोधः किन्तु शोकसन्तापवर्जितत्वं शीतस्पर्शशून्यत्वं ब्रह्मलोकस्योपवर्णितं तत्राद्याश्च श्रुतयो ब्रह्मलोकं निरूपयन्त्यस्तत्रत्यानामर्णवादीनां स्थौल्ये विरुध्येरन्। स्थूलानां पदार्थानां तत्र सत्त्वे शीतस्पर्शादेरवर्जनीयत्वादित्याह। यथोक्तमिति। ब्राह्मलौकि-

र्ह्याकाशे समाधानानुपपत्तिः। पुराणे च मनोमयानि ब्रह्मलोके शरीरादीनीति वाक्यं विरुद्ध्येत। अयोकमखिम-मित्याद्याश्च श्रुतयः। ननु समुद्राः सरितः सरांसि वाप्यः कूपा यज्ञा वेदा मन्त्रादयश्च मूर्त्तिमन्तो ब्रह्माण-मुपतिष्ठन्त इति मानसत्वे विरुद्ध्येत पुराणश्रुतिः। न मूर्त्तिमत्त्वे प्रसिद्धरूपाणामेव तत्र गमनानुपपत्तेः। तस्मा-त्प्रसिद्धमूर्त्तिव्यतिरेकेण सागरादीनां मूर्त्त्यन्तरं सागरा-दिभी रूपान्तरब्रह्मलोकगन्तृत्वं कल्पनीयम्। तुल्यायाश्च कल्पनायां यथा प्रसिद्धा एव मानस्य आकारवत्यो मूर्त्तयो युक्ताः कल्पयितुं मानसदेहानुरूप्यसम्बन्धोप-

कपदार्थानां मानसत्वेन पुराणश्रुत्यन्तरविरोधः शङ्कते। नन्विति॥ किं दृश्यमानरूपेण समुद्रादीनां ब्रह्मलोकगमनं श्रुत्यर्थः किं वा रूपान्तरेणेति विकल्पाद्यं दूषयति। न मूर्त्तिमत्त्व इति॥ उभयत्रा-नुपपत्त्यप्रसङ्गादित्यर्थः॥ प्रथमपक्षायोगे द्वितीयं पक्षं परिशिष्टमाचष्टे। तस्मादिति॥ अस्तु द्वितीयो विकल्पः का नो हानिरित्याशङ्क्य ब्रह्मलोके मानसेन देहेन मानसानामेव सागरादीनां मानसरूपेण सह सम्बन्धो-पपत्तेर्मानसा एव मूर्त्तयस्तेषां ब्रह्मलोकस्थाः कल्पयितुं युक्ता इत्याह। तुल्यायाश्चेति॥ तर्हि मनोरथकल्पितवदतिचपलत्वाद्भोगयोग्याकारत्वं सागरादीनां न स्यादित्याशङ्क्याह। दृष्टादीति। स्वप्नतुल्यत्वे मिथ्या-त्वप्रसक्तिरिति चेन्नेत्याह। नन्विति॥ प्रत्यक्षविरोधमाशङ्क्य श्रुतिविरोधमाह। न इत्य इति। ये स्वप्ने दृष्टास्ते न सन्ति न तु दृष्टा इति दर्शनं बाध्यते तथा च स्वात्मसंवेदनस्य सत्यत्वमिष्टं तथैव ब्रह्मलौकिकानां पदार्थानां मानसत्वेऽपि दृष्टान्तं विवृणोति। मानसा हीति॥ जागरिते संविदति-

राजिता पूर्णब्रह्मः प्रभुविमितं हिरण्मयम् ॥३॥

पत्तेः। दृष्टा हि मानस्य एवाकारवत्यः पुत्राद्या मूर्त्तयः स्वप्ने। ननु ता असत्या एव। न इमे सत्याः कामा इति श्रुतिस्तथा सति विरुध्येत। न। मानसप्रत्ययस्य सत्त्वोपपत्तेः। मानसा हि प्रत्ययाः स्त्रीपुरुषाद्याकाराः स्वप्ने दृश्यन्ते। ननु जाग्रद्वासनारूपाः स्वप्नदृश्या न तु तत्र रथ्यादयः स्वप्ने विद्यन्ते। अत्यल्पमिदमुच्यते। जाग्रद्विषया अपि मानसंप्रत्ययाभिनिर्वृत्ता एव सदीक्षा-भिनिर्वृत्ततेजोबन्नमयत्वाज्जाग्रद्विषयाणाम्। सङ्कल्पमूला हि लोका इति चोक्तम्। समक्लृपतां द्यावापृथिवी इत्यत्र सर्व्व-श्रुतिषु च प्रत्यगात्मन उत्पत्तिः प्रलयश्च तत्रैव स्थितिश्च

रिक्ताः सन्ति पदार्थास्तद्वासनारूपास्ते स्वप्ने भान्ति न तु संविदात्मकं तेषामिति शङ्कते। नन्विति॥ जागरितस्यापि संविद्विवर्त्तत्वान्न पृथगस्ति सत्त्वमित्युत्तरमाह। अत्यल्पमिति॥ भूमविद्यालोचनायामपि जाग्रद्विषयाणां संविद्विवर्त्तत्वं सेत्स्यतीत्याह। सङ्कल्पमूला हीति॥ इतश्च जाग्रद्विषयाणां संविद्विवर्त्तत्वमित्याह। सर्व्वश्रुतिषु चेति॥ ननु कुलालो घटं चिकीर्षुर्मनसि सङ्कल्पितमाकारं बहिर्निर्म्मिमीते तत्र सङ्कल्पो बाह्याकारस्य निमित्तं सङ्कल्पश्च पूर्व्वानुभूतसजातीयगोचरः पूर्व्वानुभूतोऽपि पूर्व्वतरसङ्कल्पनिमित्तनैमित्तिकभावः सर्व्वस्य संविद्विव-र्त्तत्वे कथमुपपद्यते तत्राह। तस्मादिति॥ यस्मात्ततः सर्व्वस्यैषां पूर्व्वकल्पीयसङ्कल्पगोचरं पूर्व्वकल्पीया ततः पूर्व्वतरैषणनिमित्ता इति। संविदेवेत्थं स्वाविद्यया निवर्त्तते निरवयवस्य सन्मात्रस्य स्वारस्येनैव-माद्यनुपपत्तेस्तस्मात्सर्व्वस्य संविद्विवर्त्तत्वेऽपि निमित्तनैमित्तिकभावे-ऽवगनिर्वाच्यो न विरुध्यत इत्यर्थः॥ अथ [illegible]व्याख्यायाः संविदोऽनि-र्वाच्यस्वप्नकाले ये विषया बाह्यतया भासन्तेऽत्र कदाचिदपि

यथा वा भूता नाभाक्थ्यादिनोच्यते। तस्मान्मानसानां बाह्यानां च विषयाणामितरेतरकार्य्यकारणत्वमिष्यत एव बीजाङ्कुरवत्। यद्यपि बाह्या एव मानसाः मानसा एव च बाह्या नानृतत्वं तेषां कदाचिदपि स्वात्मनि भवति। ननु स्वप्ने दृष्टाः प्रतिबुद्धस्यानृताभवन्ति विषयाः। सत्यमेव। जाग्रद्बोधापेक्षन्तु तदनृतत्वं न स्वतः। तथा स्वप्नबोधापेक्षञ्च जाग्रद्दृष्टविषयानृतत्वं न स्वतः। विशेषाकारमात्रन्तु सर्व्वेषां मिथ्याप्रत्ययनिमित्तमिति। वाचारम्भणं विकारो नामधेयमनृतं त्रीणि रूपाणीत्येव सत्यम्॥

---

संविदतिरेकेण सत्त्वानङ्गीकाराद्धन्तासत्त्वलक्षणमनृतत्वमापद्येत। तथा च व्यवहारभङ्गप्रसङ्गस्तत्राह। यद्यपीति॥ तथापि नानृतत्वमित्यध्याहारः। अध्यस्तस्याधिष्ठानमेव स्वात्मा। तस्मिंश्च कदाचिदप्यसत्ताऽसत्त्वं तादात्म्येनैव स्फुरणादतो न व्यवहारभङ्गप्रसङ्ग इति भावः॥ कदाचिदपि नानृतत्वमिति वदता प्रतीतिकालात्कालान्तरेऽपि विषयाणां नानृतत्वमित्युक्तं तत्रानुभवविरोधं शङ्कते। नन्विति। स्वप्नदृष्टानां प्रबोधितस्यैव कालान्तरे मिथ्यात्वमित्यङ्गीकरोति॥ सत्यमिति॥ तर्हि तेषामसत्त्वमेव स्वीकृतमित्याशङ्क्याह। जाग्रदिति॥ तथापि जाग्रद्बोधेनाविषयीकरणादसत्त्वं स्वप्नदृष्टानामेष्टव्यमित्याशङ्क्याह। तथेति॥ यदि जाग्रद्बोधेनाविषयीकरणात्तेषामसत्त्वं स्वप्नदृष्टानां पदार्थानामिष्टं तर्हि जाग्रद्दृष्टानामपि स्वप्नबोधेनाविषयीकरणादसत्त्वप्रसङ्गः। तत्र कदाचिदपि संविदि विषयाणामसत्त्वाभावमित्यर्थः॥ कथं तर्हि वाचारम्भणश्रुतिरित्याशङ्क्याह। विशेषेति॥ त्रयाणां रूपाणां सत्यत्वे विशेषाकारमात्रं मिथ्येत्युक्तमयुक्तम्। तेषामपि विशेषाकारस्य सत्त्वादित्याशङ्क्याह।

चर्य्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्व्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ ५ ॥

---

तान्यपि आकारविशेषतोऽनृतम्। स्वतः सन्मात्ररूपतया सत्यम्। प्राक्सदात्मप्रतिबोधात्स्वविषयेऽपि सर्व्वं सत्यमेव स्वप्नदृश्या इवेति न कश्चिद्विरोधः। तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयः सङ्कल्पजाश्च पित्रादयः कामाः। बाह्यविषयभोगवदशुद्धिरहितत्वाच्छुद्धसत्त्वसङ्कल्पजन्या इति निरतिशयसुखाः सत्याश्चेश्वराणां भवन्तीत्यर्थः। सत्सत्यात्मप्रतिबोधेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपमेव प्रतिपद्यन्त इति सदात्मना सत्या एव भवन्ति ॥ ५ ॥

---

तान्यपीति ॥ कथं तर्हि तेषु सत्यपदं प्रयुक्तमित्याशङ्क्याह। स्वत इति ॥ तर्हि तत्सत्यमित्येतावत्प्रयोक्तव्यं किमिति लौकि रूपाणीत्येव सत्यमित्युक्तं तत्राह। प्रागिति ॥ प्रकृतमुपसंहरति ॥ तस्मादिति ॥ प्रथमपक्षवद्द्वितीयपक्षे दोषाभावादिति यावत्। यद्यैहिकविषयवद्ब्राह्मलौकिका अपि विषया विचार्य्यमाणाः सत्यास्तर्हि कस्तत्र विशेषो येनैतत्परित्यागेन तत्कामिनां विद्याविधानं तत्राह। बाह्येति ॥ अथवा ब्रह्मलोके विषया इति शेषः ॥ प्रकृतावाः फलश्रुतेरित्यध्याहारः। ननु तेषामविद्यादशायामर्थक्रियाकारित्वरूपसत्यत्वसम्भवेऽपि कुतो विद्यावस्थायां सत्यत्वमित्याशङ्क्याह। सत्सत्येति ॥ यथा रज्ज्वां कल्पितसर्पादयो रज्जुतत्त्वबोधे तदात्मतामेवापाद्यन्ते विवेचनात्। तथा सर्व्वेऽपि विषया विद्यावस्थायामन्वयव्यतिरेकाभ्यां परिहारायासन्मात्रात्मत्वमेव प्राप्नुवन्तीति तत्सत्यत्वमविरुद्धमित्यर्थः ॥ ५ ॥

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष

---

यत्तु हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्यादि साधनसम्पन्नः त्यक्तबाह्यविषयानृततृष्णः सन्नुपास्ते तस्येयं मूर्द्धन्या नाड्या गतिर्वक्तव्येति खण्ड आरभ्यते॥ अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात्सर्व्वतो विनिःसृता आदित्यमण्डलादिव रश्मयस्ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्त्तन्त इत्यर्थः। तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्व्वत्राध्याहार्य्यम्। सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन

---

सगुणविद्याफलस्वरूपमित्युपपाद्य तत्प्राप्तये गतिर्व्वक्तव्येति नाडीखण्डमवतारयति। यत्त्विति॥ यथोक्तो गुणः सत्यकामत्वादिः। ब्रह्मचर्य्यादीत्यादिशब्दः शमदमादिसङ्ग्रहार्थः। तमेवादिशब्दार्थं स्फुटयति। त्यक्तेति॥ अधिकारिणः सकलोपाधिविध्वंसनत्वमथशब्दार्थः॥ रसेनाणिम्नेति शेषः। तदाकारा इति सम्बन्धोऽणुरसविषयः। शुक्लस्येत्यादिषष्ठी पूर्व्ववत्। पूर्णा इति शब्दोऽध्याहारद्योतनार्थः॥ कथं पुनरणुरसस्य पिङ्गलादिविचित्रो वर्णविशेषः सिद्धस्तत्राह। सौरेणेति॥ वातपित्ताख्यं सौरं तेजः। तेन पाकोऽन्नस्य च जायते। तेनाभिनिर्वृत्तेनात्मेन कफेन सम्पर्कोपचरेण पित्ताख्यं सौरं तेजो भवति पिङ्गलम्। तेन सम्पर्कादुद्भवन्न नाडीनाम् जायते पिङ्गलत्वमित्यर्थः॥

नील एष पीत एष लोहितः ॥ १॥ तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चा-

---

कफेनाल्पेन सम्पर्कात्पिङ्गलं भवति सौरं तेजः पित्ताख्यम् ॥ तदेव वातभूयस्त्वान्नीलं भवति । तदेव च कफभूयस्त्वाच्छुक्लम् । कफेन समतायां पित्तम् । शोणितबाहुल्येन लोहितम् । वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः ॥ कथं भवन्तीति श्रुतिस्त्वाहादित्यसम्बन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति । कथमसौ वाऽऽदित्यः पिङ्गलो वर्णत एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव । तस्याध्यात्मनाडीभिः कथं सम्बन्ध इत्यत्र दृष्टान्तमाह । तत्तत्र यथा लोके महान् विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ

---

तदेव च पित्ताख्यं सौरन्तेजो यथोक्तपाकाभिनिर्वृत्तेन प्रभूतेन वातेन सम्बन्धात्तद्भूयस्त्वाद्भवति नीलं तेन च सम्बन्धाद्व्याप्तरसस्य नाडीनाञ्च जायते नैल्यमित्याह । तदेवेति ॥ [illegible] पित्ताख्यं सौरन्तेजो यथोक्तपाक[illegible]भिनिर्वृत्त[illegible] [illegible] भूयस्त्वाद्भवति शुक्लं तेन च सम्बन्धाद्व्याप्तरसस्य नाडीनाञ्च शौक्ल्यं भवतीत्याह । तदेव चेति ॥ [illegible]पाकाभिनिर्वृत्तेन कफेन [illegible]भिनिर्वृत्तेनैव [illegible] समतायां तदेव ते[illegible] पीतं जायते । [illegible] च नाडीनाञ्च पीतत्वं भवतीत्याह । कफेनेति ॥ [illegible] तु यथोक्तपाकाभिनिर्वृत्त[illegible] [illegible] भवति तदा तत्र नाडीनाञ्च लौहित्यं भवतीत्याह । [illegible] । वैद्यकादिति । [illegible]कारमाह । कथ-

मुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥२॥ तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः

गच्छतीमञ्च सन्निहितममुञ्च विप्रकृष्टं दूरस्थमेव। यथा लोके दृष्टान्तो महापथ उभौ ग्रामौ प्रविष्टः। एवमेवैता आदित्या महापथा यथा गच्छन्ति तथोभयत्रादित्यस्य रश्मयः उभौ लोकावमुञ्चादित्यमण्डलमिमञ्च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः। यथा महापथः। कथममुष्मादादित्यमण्डलात्प्रतायन्ते सन्तता भवन्ति। ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ता गताः प्रविष्टा इत्यर्थः। आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूताः स्तस्तेऽमुष्मिन् रश्मीनामुभयलिङ्गत्वात्ते इत्युच्यन्ते। तत्तत्र एवंसति यत्र यस्मिन् काले एतत्स्वप्नमयो जीवः सुप्तो भवति

मिति ॥ नाभेरूर्ध्वं हृदयादधस्तादामाशयमाचक्षते। तद्गतं तेजः सौरं पित्तमित्युच्यते। तच्चान्नरसस्य धात्वन्तरस्य कारिवशाद्वर्णविशेषे कारणमाशयगतं पीतं रक्तं रसरक्तमादित्यादिवर्णमादित्यर्थः। कथं तर्हि पिङ्गलस्येत्याद्या श्रुतिरित्याशङ्क्याह। श्रुतिस्त्विति ॥ उक्तमर्थमाख्यायिकाद्वारा स्फोरयति। कथमित्यादिना ॥ आदित्यस्य पैङ्गल्यादयो वर्णविशेषाः शास्त्रप्रामाण्यादेव प्रत्येतव्याः ॥ आदित्यस्य तेजसो नाडीष्वनुगतस्य पैङ्गल्यादयो वर्णविशेषा भवन्तीत्युक्तं तदेव मन्त्रद्वारा दृष्टान्तवचनेन स्पष्टयति। महेत्यादिना ॥ उभयत्रादित्यमण्डले पुरुषे चेत्यर्थः। अत्र पूर्वोक्तमेव दृष्टान्तमनुवदति। यथेति ॥ उभौ ग्रामौ महापथा यथा गच्छति तथोभयत्रादित्यस्य रश्मयः प्रविष्टा इत्यर्थः ॥ तत्रैव

स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ॥३॥ अथ यत्रैतदबलिमानं नीतो

---

स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति । उपसंहृतसर्वकरणवृत्तिरित्येतत् । अतो बाह्यविषयसम्पर्कजनितकालुष्याभावात्सम्यक्प्रसन्नः सम्प्रसन्नो भवति । अत एव स्वप्नविषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः । यदैवं सुप्तो भवति आसु सौरतेजःपूर्णासु यथोक्तासु नाडीषु तदा सृप्तः प्रविष्टो नाडीभिर्द्वारभूताभिर्हृदयाकाशं गतो भवतीत्यर्थः । न ह्यन्यत्र सत्सम्पत्तेः स्वप्नदर्शनमस्तीति 'सामर्थ्यान्नाडीष्विति सप्तमी तृतीयया परिणाम्यते । तं तदा सम्पन्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति स्वरू-

---

प्रवेशं प्रश्नद्वारा प्रकटयति ॥ कथमित्यादिना ॥ कथं नाडीनां पिङ्गलादिवर्णत्वमित्याशङ्क्य सौरेण तेजसेत्यादिनोक्तं स्मारयति । यथोक्तास्विति ॥ अमुष्मादित्ये सृप्ता इति सम्बन्धः । कथं स्त्रीलिङ्गेन निर्दिष्टानां रश्मीनां पुंलिङ्गेन निर्देशस्तत्राह । रश्मीनामिति ॥ नाडीस्वरूपज्ञा विज्ञानात्मनः स्वोपाधिकरणत्वेन ताः सौक्ष्म्यादौ स्वायं प्रतीति । तत्रेति ॥ सप्तम्यर्थमेव स्फुटयति । एवं सतीति ॥ नाडीस्वरूपे पूर्वोक्तरीत्या निरूपिते सतीत्यर्थः । एतत्स्वपनमिति क्रियाविशेषणम् ॥ समस्तविशेषणस्यार्थवत्त्वमाह । स्वापस्येति ॥ दर्शनवृत्तिरदर्शनवृत्ति-श्चेति द्विप्रकारं स्वापस्येष्टम् । तत्र दर्शनवृत्तेः स्वापस्य व्यावृत्त्यर्थं समस्त इति विशेषणम् ॥ तस्य सम्पिण्डितमर्थमाह । उपसंहृतेति ॥ विशेषणा-

भवति तमभित आसीना आहुर्जानासि मां जा-
नासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो
भवति तावज्जानाति ॥ ४ ॥ अथ यत्रैतदस्माच्छ-

---

पावस्थितत्वात्तदात्मनः । देहेन्द्रियविशिष्टं हि सुख-
दुःखकार्य्यप्रदानेन पाप्मा स्पृशतीति । नतु सत्सम्पन्नं स्वरू-
पावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते । अविषयत्वात् ।
अन्यो ह्यन्यस्य विषयो भवति न त्वन्यत्वं केनचित्कुतश्चिदपि
सत्सम्पन्नस्य । स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्थां
प्रति गमनम् । बाह्यविषयप्रतिबोधोऽविद्याकामकर्म्मबीजस्य
अब्रह्मविद्याकृतायादाहनिमित्तमित्यवोचाम षष्ठ एव तदि-
हापि प्रत्येतव्यम् । यदैवं सुप्तः सौरेण तेजसा हि नाड्यन्तर्ग-
तेन सर्व्वतः सम्पन्नो व्याप्तो भवति । अतो विशेषेण चक्षुरा-
दिनाडीद्वारैर्बाह्यविषयभोगायाऽप्रवृत्तानि करणान्यस्य

---

न्तरमुत्थाप्य व्याकरोति । अत इति॥ उपसंहृतसर्व्वकरणत्वादिति
यावत् । उक्तं विशेषणद्वयमुपजीव्य स्वप्नमित्यादि व्याचष्टे ॥ अत इति ॥
नाडीषु प्रविष्टो भवतीति यदुक्तं तदयुक्तम् । य एषोऽन्तर्हृदय आकाशस्त-
स्मिन् शेत इत्युक्तोकारादित्याशङ्क्याह । नाडीभिरिति ॥ नाडीष्विति
श्रुता सप्तमी । कथं नाडीभिरिति तृतीया व्याख्यायते तत्राह । न हीति ॥
तदेतदिति सुषुप्तावस्थोच्यते ॥ तस्यामवस्थायां कर्म्माभावे कथं पुनरुत्था-
नमित्याशङ्क्याह । देहेति॥ सुखदुःखानुभवाभावात्पाप्मासंस्पर्शोऽत्र
विवक्षितो न तु कर्म्माभावादित्यर्थः ॥ अविषयत्वं साधयति । अन्यो
हीति ॥ सुषुप्तेः स्वरूपावस्थस्य कथं प्रच्यवनमित्याशङ्क्याह । स्वरूपेति ॥

दुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

---

प्रैत्य विद्वान्। इतरस्तु विद्वान्यथोक्तसाधनसम्पन्नः स ओँ इत्योङ्कारेणात्मानं ध्यायन् यथापूर्वं वा उ। एव ऊर्ध्वं वा विद्वांश्चेदितरस्तिर्य्यगित्यभिप्रायः। मीयते प्रमीयते गच्छतीत्यर्थः। स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसो क्षयः स्यात्तावता कालेनादित्यं गच्छति प्राप्नोति क्षिप्रं गच्छतीत्यर्थो न तु तावतैव कालेनेति विवक्षितम्। किमर्थमादित्यं गच्छतीत्युच्यते। एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यस्तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान्। अतो विदुषां प्रपदनं प्रपद्यन्ते ब्रह्मलोकमनेन द्वारेणेति प्रपदनम्। निरोधनं निरोधोऽस्मादादित्यादविदुषां भवतीति निरोधः।

---

सर्वनिमित्तद्योतनार्थमिति भेदः। एतन्नयनमिति क्रियाविशेषणम्। प्रारब्धकर्मावसानार्थोऽथशब्दः। एतादिति क्रियाविशेषणमेतदुत्क्रमणं यथा स्यात्तथेत्यर्थः। यथोक्ताभिर्नाडीषु प्रसृताभिरादित्यमण्डलादागताभिरिति यावत्। कर्मणा जितं कर्मोपार्जितं स्वात्मसम्बन्धितामापादितं लोकमनतिक्रम्य तं प्रैत्य विद्वान् केवलकर्मवान् गच्छतीत्यर्थः॥ दहरविद्यावतो गतिं दर्शयति। इतरस्त्विति॥ यथोक्तसाधनं दहरविज्ञानं तेन सम्पन्नो विशिष्ट इत्यर्थः। स ध्यायन्गच्छतीत्युत्तरत्र सम्बन्धः। यथा पूर्वं स्वभावस्थायामिव मरणावस्थायामपीत्यर्थः। वा वेति निपातद्वयस्यावधारणरूपमर्थं कथयति। एवेति॥ उद्वा इत्यस्यार्थमाह। ऊर्ध्वमिति॥ वाशब्देन द्योतितं विकल्पं दर्शयति। विद्वांश्चेदिति॥ यदि विद्वान् प्रमीयते तदोर्ध्वमेव गच्छति। यदि त्वविद्वान् प्रमीयते तदा तिर्य्यगेव गच्छतीति विभागः॥ [illegible]-

तदेष श्लोकः शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥६॥६॥

---

सौरेण तेजसा देहे एव निरुद्धाः सन्तो मूर्धन्यया नाड्या नोत्क्रामन्त एवेत्यर्थः ॥ ५ ॥

विष्वङ्ङन्या इति श्लोकादेतस्मिन्यथोक्तेऽर्थे एष श्लोको मन्त्रो भवति। शतञ्चैका चैकोत्तरशतं नाड्यो हृदयस्य मांसपिण्डभूतस्य सम्बन्धिन्यः प्रधानतो भवन्ति। आनन्त्यात् देहे नाडीनां तासामेका मूर्धानमभिनिःसृता विनिर्गता तयोर्ध्वमायन् गच्छन्नमृतत्वममृतभावमेति विष्वङ्नानागतयस्तिर्यग्विसर्पिण्य ऊर्ध्वगाश्चान्या नाड्यो भवन्ति संसारगमनद्वारभूता न त्वमृतत्वाय किं तर्ह्युत्क्रमणे एवोत्क्रान्त्यर्थमेव भवन्तीत्यर्थः। द्विरभ्यासः प्रकरणसमाप्त्यर्थः ॥ ६ ॥

---

न्यर्थ्यं दर्शयितुमनन्तरवाक्यमादत्ते किं स्यादित्यत आह। अत इति॥ अविदुषामपि तर्हि प्राप्तानामादित्यं ततो निरुद्धानां पुनर्ब्रह्मलोकप्राप्तिरित्याशङ्क्याह। सौरेणेति ॥ ५ ॥

देहे निरुद्धानां मूर्धन्यया नाड्या नोत्क्रमणमविदुषामित्यत्र लिङ्गं दर्शयति। विष्वङ्ङिति॥ यथोक्तार्थो॥ नाडीविभागलक्षणः प्रधानात् इति विशेषणतात्पर्यमाह। आनन्त्यादिति॥ प्रकरणं नाडीविषयं दहरविद्याविषयं वा ॥ ६ ॥

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानम-

---

अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्युक्तम् । तत्र कोऽसौ सम्प्रसादः कथं वा तस्याधिगमः । यथा सोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते। येन लक्षणेनाभिनिष्पद्यते स किंलक्षण आत्मा । सम्प्रसादस्य च देहसम्बन्धीनि रूपाणि ततो यदन्यत्कथं स्वरूपं इत्येतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते। आख्यायिका तु विद्याग्रहणसम्प्रदानविधिप्रदर्शनार्था विद्यास्तुत्यर्था च। राजसेवितं पानीयमितिवत् ॥ य आत्माऽपहतपाप्मा

---

दहरविद्यायामुपास्यस्तुत्यर्थमुक्तमनुवदति। अथेति॥ विवेकानन्तर्यमथशब्दार्थो व्याख्यातः। शरीरात्समुत्थानं तस्मिन्नहंममाभिमानत्यागः॥ स्वरूपं विशिनष्टि। एष इति॥ उक्तकर्तृत्वमाचार्यस्य दर्शितमेव॥ प्राणो वा सम्प्रसादो विज्ञानात्मा वेति संशयात्पृच्छति। तत्रेति। प्रकृतं वाक्यं सप्तम्यर्थः। तस्य च सम्प्रसादस्य परमात्मविषयं ज्ञानं केनोपायेन भवतीति प्रश्नान्तरमाह। कथं वेति॥ किन्तस्य परमात्माधिगमेनेत्याशङ्क्याह। यथेति॥ तथा तस्याधिगमः कथमिति सम्बन्धः। अभिनिष्पद्यमानरूपस्यात्मा सविशेषो निर्विशेषो वेति प्रश्नान्तरं करोति। येनेति॥ आत्मनो हि सच्चिदानन्दैकतानाद्यर्था-

स्तद्विजानातीति ह प्रजापतिरुवाच ॥ १ ॥
तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमा-
त्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाᳪश्च
लोकानाप्नोति सर्वाᳪश्च कामानितीन्द्रो हैव देवा-

---

विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । अस्योपासनायोपलब्ध्यर्थं हृदयपुण्डरीकमभिहितम् । यस्मिन् कामाः समाहिताः सत्या अनृताभिधाना यदुपासनसहभावि ब्रह्मचर्य्यं साधनमुक्तम् । उपासनफलभूतकामप्रतिपत्तये च मूर्द्धन्या नाड्या गतिरभिहिता । सोऽन्वेष्टव्यः शास्त्राचार्य्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । किन्तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान् यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्य्योपदेशेनान्विष्य

---

जराणि रूपाणि दृश्यमानानि शरीरसम्बन्धप्रयुक्तानि । तथा च ततः शरीरादुपाधेर्यद्व्यक्तस्य रूपं तत्कथं सर्व्वप्रमाणाऽप्रतिपन्नमस्तीति मन्वानस्याह । अपहतपाप्मा चेति॥ एतेषां प्रश्नानामुत्तरत्वमवतारयति । इत्येव इति॥ प्रजापतेरिन्द्रविरोचनयोश्च सम्वादरूपा याऽसावाख्यायिका दृश्यते सा किमर्थेत्याशङ्क्याह । आख्यायिकेति ॥ विनयश्च विद्याप्राप्तौ गुरोर्भक्ताः शुश्रूषदाने च यो विधिः ब्रह्मचर्यादिप्रकारस्य प्रदर्शनार्थेति यावत् । यद्वा विद्यायाः महत्त्वं स्वीकर्त्तव्यं यस्य सम्प्रदाने सम्प्रदाने विधौ दृश्यते तस्य विधिर्ब्रह्मचर्यादिकतदर्शनार्थेत्यर्थः ॥ आख्यायिकायास्तात्पर्यमाकारयन्नाह । विद्येति॥ प्रजापतिना प्रोक्ता

नामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥ तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमू-

---

विजानाति स्वसंवेद्यतामापादयति तस्यैतत्सर्वलोककामावाप्तिः । सर्वात्मताफलं भवतीति ह किल प्रजापतिरुवाच । अन्वेष्टव्यो विजिज्ञासितव्य इति चैष नियमविधिरेव नापूर्वविधिः । एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः । दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः । दृष्टार्थत्वञ्च दर्शयिष्यति नाहमत्र भोग्यं पश्यामीत्यनेनासकृत् । पररूपेण च देहादिधर्म्मैरवगम्यमानस्यात्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलम् । इति नियमार्थतैवास्य विधेर्युक्ता न त्वग्निहोत्रादीनामिवापूर्वविधित्वमिह सम्भवति । तद्धोभय इत्याद्याख्यायिकाप्रयोजनमुक्तम् ॥ तद्ध किल प्रजापतेर्वचनमुभये देवासुराः । देवाश्चासुराश्च देवासुरा अनु परम्परागतं स्वकर्णगोचरापन्न-

---

देवैरसुरैश्च प्रार्थिता इन्द्रविरोचनाभ्यां देवासुराधिपतिभ्यामप्यात्मन महत्ता प्रेप्सिता देवराजेन च कथञ्चित्प्राप्ता । तस्मान्महार्हेयं विद्येति तस्याः स्तुत्यर्थाऽऽख्यायिकेत्यर्थः ॥ महत्त्वरूपापितस्य महार्हत्वे दृष्टान्तमाह । राजसेवितमिति ॥ सम्यगात्मोपाधि प्रविष्टं चैतन्यं तदेव निरुपाधि निर्विशेषमिति । सविशेषनिर्विशेषयोरभेदाभिप्रायेण प्रजापतिवाक्यं व्याकर्तुमादत्ते । य आत्मेति ॥ तत्र सोऽन्वेष्टव्य इति वाक्ये पदच्छेदमाह । तस्मिन्निति । उपासनमपि किमर्थमित्यपेक्षायामाह । उपक्रममध्यमिति ॥ तस्यैतत्फलमिति सम्बन्धः । कथं निर्गुणविद्यायाः सर्वलोककामावाप्तिः

यतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्त-मिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्य-

---

मनुबुबुधिरेऽनुबुबुधवन्तः। ते चैतत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्नित्युच्यते। ते होचुरुक्तवन्तोऽन्योन्यं देवाः स्वपरिषद्यसुराश्च। हन्त यद्यनुमतिर्भवतां प्रजापतिनोक्तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानित्युक्त्वा इन्द्र एव राजैव स्वयं देवानामितरान्देवांश्च भोगपरिच्छदश्च सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवान्। तथा विरोचनोऽसुराणां विनयेन गुरवोऽभिगन्तव्या इत्येतद्दर्शयति। त्रैलोक्यराज्याच्च गुरुतरा विद्येति। यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ तौ तथा गुरुमभ्युपगतवन्तौ। तौ ह किलासंविदानावेवान्योन्यं संविदमकुर्वाणौ विद्याफलं प्रत्यन्योन्यमीर्ष्यां

---

फलमित्याशङ्क्याह। सर्वात्मतेति॥ परिच्छेदभ्रमव्यावृत्त्या पूर्णस्वरूपेणावस्थितिरित्यर्थः॥ प्रजापतिवाक्यात्प्रतीयमानविधिस्वरूपमाह। सोऽन्वेष्टव्य इति एवकारव्यावर्त्यं दर्शयति। नापूर्वविधिरिति॥ यद्वादेव विद्योदये तदुत्पत्त्यर्थोऽपूर्वविधिरग्निहोत्रादिविधिवन्न सम्भवतीत्यर्थः। कथमिह नियमविधिरपि स्यादवगतार्थविधिर्वादित्याशङ्क्याह। एवमिति॥ मिथ्याज्ञानसंस्कारप्राबल्यादनात्माभिनिवेशस्य पक्षे प्राप्तौ आत्मानात्माभ्यामात्मार्थं पक्षमेव कार्यमिति नियम इत्यर्थः। इतश्च नियमविधिरेव

कामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामान्

---

दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमाजग्मतुरागतवन्तौ। तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्य्यमूषतुरुषितवन्तौ। अभिप्रायज्ञः प्रजापतिस्तावुवाच किमिच्छन्तौ प्रयोजनमभिप्रेत्येच्छन्ताववास्तमुषितवन्तौ युवामितीत्युक्तौ तौ होचतुः। य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छन्ताववास्तेति। यद्यपि प्राक्प्रजापतेः समीपागमनादन्योन्यमीर्षायुक्तावभूतां तथापि विद्याप्राप्तिप्रयोजनगौरवात्त्यक्तरागद्वेषमोहेर्षादि-

---

नापूर्व्वविधिरित्याह। दृष्टार्थत्वादिति॥ अन्वेषणविजिज्ञासनाभ्यां साधनमुक्तम्। तस्य च विद्याद्वाराऽविद्यानिवृत्तिर्दृष्टमेव फलमन्वयव्यतिरेकाभ्यां तद्धेतुत्वावगमात्तथा च तत्र नापूर्व्वविधेरवकाशोऽस्तीत्यर्थः॥ तयोर्दृष्टफलवत्त्वे वाक्यशेषमनुकूलयति। दृष्टार्थत्वञ्चेति कथमसत्यप्युक्तेन पश्यामीति वर्त्तमानोपदेशे नान्वेषणादेर्दृष्टफलतेत्याशङ्क्य देहातिरिक्तात्मवादिनां वाक्योत्थज्ञानादनुमानाच्च मनुष्यत्वादिभ्रमनिवृत्तिप्रसिद्धेर्मैवमित्यभिप्रेत्याह। परत्रपेचेति॥ अन्वेषणादेर्दृष्टफलत्वे फलितमाह। इति नियमार्थतेति॥ अपूर्व्वविधित्वं तद्विषयत्वमिति यावत्। इहेत्यन्वेषणादेरक्रियत्वेऽग्निहोत्रादिवदन्वेषणादेरत्यन्ताप्राप्तप्रभावस्योक्तत्वादित्यर्थः॥ इदानीमाख्यायिकां व्याख्यातुमाख्यायिका तु विद्यायाः सम्प्रदानविधेः प्रदर्शनार्थेत्यादिनोक्तं स्मारयति। तद्धेति॥ अवतारितामाख्यायिकामक्षराणि व्याचष्टे। तद्धेत्यादिना॥ किमितीन्द्रविरोचनौ विद्यार्थिनावपि परिकरं परित्यज्य शरीरमात्रेण प्रजापतिं प्रगतवन्तौ

यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥१॥ तौ ह

---

द्वावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ । तेनेदं प्रख्यापितमात्मविद्यागौरवं तावेवं तपस्विनौ शुद्धावकल्मषौ योग्यावुपलक्ष्य प्रजापतिरुवाचाह । य एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्विदितकषायैर्दृश्यते योगिभिर्द्रष्टा । एष आत्माऽपहतपाप्मादिगुणो यमवोचं पुराऽहं यद्विज्ञानात्सर्वलोककामावाप्तिरेतदमृतं भूमाख्यम् । अत एवाभयमत एव ब्रह्म बृहत्तममित्यर्थैतत्प्रजापतिनोक्तम् । अक्षिणि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ । अथ

---

तत्राह । विनयेनेति ॥ तयोरुक्तरूपगतिवशादेव दर्शितमर्थान्तरं कथयति । त्रैलोक्येति । विद्येति दर्पयतीति पूर्वेण सम्बन्धः ॥ तस्या गुरुतरत्वे हेतुमाह । यत इति ॥ यदिदं मेनौ तमात्मानं ज्ञातुमिच्छन्ताववास्त इति वक्तव्येऽववास्तमिति प्रजापतिवचोऽनुकरणमात्रमिति द्रष्टव्यम् । अथ इन्द्रविरोचनयोर्मिथो वैरिणोः कथमेकत्रावस्थानं चिरमासीदित्याशङ्क्याह । यद्यपीति ॥ देवासुरराजयोः स्वभावतो वैरिणोरपि विद्यार्थित्वेन चिरमेकत्र ब्रह्मचर्यवासेन सूचितमर्थं दर्शयति । तेनेति ॥ शुद्धावकल्मषौ प्रक्षालितदोषाविति यावत् । पुरुषो दृष्टेति सम्बन्धः ॥ अक्षदादिभिन्नम् द्रष्टा दृष्टेः साक्षीत्याशङ्क्याह । निवृत्तेति ॥ इन्द्रियाणां विषयेभ्यो वैमुख्ये हेतुमाह । कषायेति ॥ योगिभिः समाधिनिष्ठैरन्तर्दृष्टिभिरिति यावत् । य आत्मेत्यादिवाक्येनात्मैकवाक्यतां दर्शयति । यत इति । पूर्णविद्यया फलैकवाक्यत्वं सूचयति । भूमाख्यमिति ॥

प्रजापतिरुवाच यं एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत

योऽयं हे भगवोऽप्सु परिख्यायते परि समन्ताज्ज्ञायते। यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते। खड्गादौ च कतम एष एषां भगवद्भिरुक्तः किंवैक एव सर्व्वेष्विति॥ एवं पृष्टः प्रजापतिरुवाच। एष उ एव दच-क्षुषि द्रष्टा मयोक्त इति। एतम्मनसि कृत्वैषु सर्व्वेषु मध्येषु परिख्यायत इति होवाच॥ ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेर्विगतदोषस्याचार्य्यस्य सतः। सत्यमेवं नानुज्ञातम्। तथाप्यात्मन्यध्यारोपितपाण्डित्यमहत्त्वबोद्धृत्वौ हीन्द्रविरोचनौ तथैव च प्रथितौ लोके। तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणा-

इति शब्दो वाक्यसमाप्त्यर्थः। उक्तेऽर्थे वाक्यं पातयति। अथ योऽयमिति॥ प्रश्नार्थोऽथशब्दः। इतिशब्दः समाप्त्यर्थः। यच्चक्षुरुपलक्षितो द्रष्टा एष एव मयोक्तोऽपहतपाप्मत्वादिधर्म्मवानात्मा युवाभ्यां पुनरन्यथा गृहीतमिति निपातेन सूचयन्नेव प्रजापतिरित्याह। एवमिति॥ प्रजापति-श्चेदेवमुक्तवान् कथं तर्हि तयोर्वैपरीत्यं न निरस्तमित्याशङ्क्याह। एतदिति॥ मयोक्तवचोरूपं वक्ष्यति यावत्॥ यत्प्रजापतिना मनसि निहितं तत्प्रकटीकर्त्तुं चोदयति। नन्विति॥ शिष्यविषयगतं विपरीतग्रहण-माचार्य्येण उपेक्षितमित्युक्तोत्य प्रजापतेरभिप्रायमाह। सत्यमेव-मिति॥ कथं तर्हि तयोर्विपरीतग्रहणमपनेतव्यमित्याशङ्क्याह। स्वाधी-ताविति॥ तावदिमपरीतमिति शेषः। चकारेण शिक्षायामनुकृष्यते।

योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्व्वेष्वेतेषु परि-ख्यायत इति होवाच ॥ ४ ॥ ७ ॥

---

वित्युक्तौ स्यातां ततस्तयोश्चित्तदुःखं स्यात्तज्जनिताच्च चित्तावसादात्पुनः प्रश्नश्रवणग्रहणावधारणं प्रत्युत्साह-विघातः स्यादतो रक्षणीयौ शिष्याविति मन्यते प्रजा-पतिः। गृहीतां तावत्तदुदशरावदृष्टान्तेनापनेष्यामीति च। ननु न युक्तमेष उ एवेत्यनृतं वक्तुम्। न चानृत-मुक्तम्। कथमात्मनोक्तोऽक्षिपुरुषो मनसि सन्निहिततरः शिष्यगृहीताच्छायात्मनः सर्व्वेषाञ्चाभ्यन्तरः सर्व्वान्तर इति श्रुतेः। तमेवावोचदेष उ एवेत्यतो नानृतमुक्तं प्रजापतिना। तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं ह्याह ॥ ७ ॥

---

यद्यदाचरति श्रेष्ठ इति न्यायेन सर्व्वेषां मृषावादित्वं स्यादिति शङ्कते। नन्विति ॥ प्राजापत्यमभिप्रायमेव प्रकटयन्नतिप्रसङ्गं परिहर्त्तुं तदीयम-नृतवादित्वं दूषयति। न चेति ॥ तदेवाकाङ्क्षापूर्व्वकं स्फुटयति। कथमित्यादिना ॥ शिष्याभ्यां गृहीतो योऽयमात्मा ततः स्वकायादात्मना स्वेनैव प्रजापतिनोक्तो योऽक्ष्यभ्युपलक्षितो द्रष्टा स मनसि प्रजा-पतेः सन्निहिततरोऽतः स एव च तेनोक्त इत्यर्थः। इतश्च द्रष्टा प्रजा-पतेर्मनसि सन्निहिततर इत्याह। सर्व्वेषाञ्चेति ॥ प्रजापतेर्मनसि द्रष्टुः सन्निहितत्वेऽपि कथं तस्य न मृषावादित्वमत आह। तमेवेति ॥ इतश्च प्रजापतेर्न मृषावादित्वमित्याह। तथा चेति ॥ ७ ॥

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव

---

उदशरावे उदकपूर्णे शरावादावात्मानमवेक्ष्यानन्तरं यत्तत्राऽऽत्मानं पश्यन्तौ न विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथामित्युक्तौ तौ ह तथैवोदशरावेऽवेक्षाञ्चक्राते ऽवेक्षणञ्चक्रतुस्तथा कृतवन्तौ। तौ ह प्रजापतिरुवाच किं पश्यथ इति ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितमिदमावाभ्यां न विदितमित्यनिवेदिते चाज्ञानहेतौ ह प्रजापतिरुवाच किं पश्यथ इति। तत्र कोऽभिप्राय इति। उच्यते। नैव तयोरिदमावयोरविदितमित्याशङ्का माभूच्छायात्मन्यात्मप्रत्ययो निश्चित एवासीत्। येन वक्ष्यति तौ ह शान्तहृदयौ प्रवव्रजतुरिति। न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते। तेन नोचतुरिदमावाभ्यामविदित-

---

आत्मानमुदशरावेऽवेक्ष्यन्त तत्रात्मानं पश्यन्तौ तावनन्तरं यदात्मनो न विजानीथो युवां तन्मे प्रब्रूतमिति सम्बन्धः॥ प्रजापतिवचनमुपक्रमानुकूलं न भवतीति शङ्कते। नन्विति॥ उपक्रममतिक्रम्य ब्रुवाणस्य प्रजापतेरभिप्रायमाह। उच्यत इति॥ तत्र प्रथममिन्द्रविरोचनाभ्यामिदमविदितमिति प्रजापतिं प्रत्यवचने कारणमाह। नैवेति॥ छायात्मनि छायायां तत्र तौ शरीरे चेन्द्रविरोचनयोर्यथाक्रममात्मधीरियं निश्चिता

आलोमभ्य आनखेभ्यः प्रतिरूपमिति ॥२॥ तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वो दशरावेऽवेक्षा-

---

मिति। विपरीतग्राहिणौ च शिष्यावलक्ष्योदशरावेक्षिते स्वयमेव पप्रच्छ किं पश्यथ इति। विपरीतनिश्चयापनयाय च वक्ष्यति साध्वलङ्कृतावित्येवमादि। तौ होचतुः। यथैवावां हे भगवो लोमनखादिमन्तौ स्वः। एवमेवेदं लोमनखादिसहितमावयोः प्रतिरूपमुदशरावे पश्याव इति। तौ ह पुनः प्रजापतिरुवाच। छायात्मनिश्चयापनयाय साध्वलङ्कृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरीक्षेथाथामितीह च नादिदेश यदज्ञातं तम्मे प्रब्रूतमिति। कथं पुनरनेन साध्वलङ्कारादि कृत्वोदशरावावेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात्। साध्वलङ्कारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा-

---

प्राप्तेत्यर्थः। तयोस्तत्रात्मप्रत्ययस्य निश्चितत्वे गमकमाह। येनेति॥ प्रश्नजनेऽपि प्राग्लक्षणयोस्तयोः कथमात्मप्रत्ययस्य कथं निश्चितत्वमित्याशङ्क्याह न होति॥ तेन विपरीतग्राहित्वेनेति यावत्। उक्तमनूद्य गृहीत्वा विपरीतं गृहीतवन्तौ तर्हि प्रजापतिनोपेक्षणीयौ कुतो नेत्यादित्याशङ्क्य प्राजापत्यमभिप्रायमाह। विपरीतग्राहिणौ चेति॥ कथमिदं प्रजापतेरभिमतमित्यवगतमत आह। विपरीतेति॥ प्राजापत्ये प्रश्ने देवा-

ञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥२॥ तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्व-

---

शरीरसम्बन्धानामेवमेवं शरीरस्यापि छायाकरत्वं पूर्वं बभूवेति गम्यते। शरीरैकदेशानाञ्च लोमनखादीनां नित्यत्वेनाभिप्रेतानामखण्डितानां छायाकरत्वं पूर्वमासीत्। छिन्नेषु च नैव लोमनखच्छाया दृश्यतेऽतो लोमनखादिवच्छरीरस्यागमापायित्वं सिद्धमिति। उदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्यानात्मत्वं सिद्धम्। उदशरावादौ छायाकरत्वाद्देहसम्बद्धालङ्कारादिवत्। न केवलमेतावदेतेन यावत्किञ्चिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च। कादाचित्कत्वान्नखलोमादिवदनात्मेति प्रत्येतव्यम्। एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलङ्कारादिदृष्टान्ते प्रजापतिनोक्ते श्रुत्वा तथा कृतवतोरपि छायात्मविपरीतग्रहो नापजगाम यस्मा-

---

सुरराजयोर्विपरीतग्रहणमनुवदति। तौ हेति॥ तदपनयनप्रकारं सूचयति। तौ ह पुनरिति॥ छायायां तद्धेतौ च देहे तयोरात्मनिश्चयो यस्तस्य निरासायेति यावत्। दृष्ट्वेति पर्य्यायोक्तिः। नादिदेश तत्प्रयोजनाभावादित्यर्थः॥ उक्तोदाहरणेन छायायां देहे चेन्द्रविरोचनयोरात्मप्रत्ययो नापनीतो भवतीति पृच्छते। कथमिति॥ छायायास्तत्कारणस्य चागन्तुकत्वादनात्मत्वमत्र विवक्षितमित्युत्तरमाह। साध्वलङ्कारेति॥ पूर्व्वमुदकादिसम्बन्धावस्थायामिति यावत्। व्यभिचारित्वाच्च छायातत्कारणयोरेवानात्मत्वमित्याह। शरीरैकदेशानामिति॥ उपप-

लङ्कृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥ तौ हान्वीक्ष्य प्रजापतिरुवाच

---

तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानाविन्द्रविरोचनावभूतामिति गम्यते । तौ पूर्ववदेव दृष्टनिश्चयौ पप्रच्छ किं पश्यथ इति । तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्ववद्यथा साध्वलङ्कारादिविशिष्टावावां स्व एवमेवेमौ छायात्मानाविति सुतरां विपरीतनिश्चयौ बभूवतुः । यस्यात्मनो लक्षणं य आत्माऽपहतपाप्मेत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोर्य एषोऽक्षिणि पुरुषो दृश्यत इति साक्षादात्मनि निर्दिष्टे तद्विपरीतग्रहापनयायोदशरावे साध्वलङ्कारदृष्टान्तेऽप्यभिहितमात्मस्वरूपबोधाद्विपरीतग्रहो नापगतः । अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवात्मानं मनसि निधाय एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति

---

क्तिभ्यां सिद्धमर्थं निगमयति । इन्त्युदशरावादाविति । न केवलं छायातत्कारणयोरेवानात्मत्वं किन्तूक्तन्यायेनाहङ्कारादीनां तद्धर्माणाञ्चात्मीयत्वं प्रत्युक्तमिति प्रसङ्गादतिदिशति । न केवलमिति । आत्मत्वाभिमतमहङ्कारादीति शेषः । मोहादावात्मीयत्वाभिमतमित्यध्याहार्यम् ॥ एतेनेति सूचितमेव हेतुं दर्शयति । कदाचित्कत्वादिति ॥ अनात्मे त्यनात्मत्वमनात्मीयत्वोपलक्षणार्थम् ॥ तर्हि तयोर्यथेष्टकरत्वा विपरीतग्रहणस्यापगतत्वात्किमुत्तरेण प्रजापतिवचनेनेत्याशङ्क्याह । एवमिति ॥ तथैवेत्यस्य व्याख्यानं पूर्ववदिति ॥ यथैवेदमिति प्रतीकग्रहणं तद्व्याचष्टे । यथेति ॥ आवां स इतीदमुदाहरणं यथैवेति सम्बन्धः । अक्षिवाक्या-

अनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुप-
निषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभवि-
ष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान्

---

प्रजापतिः। पूर्व्ववत्। न तु तदभिप्रेतमात्मानम्। य आत्मेत्याद्यात्मलक्षणश्रवणेनाक्षिपुरुषश्रुत्या चोदशरावाद्युपपत्त्या च संस्कृतौ तावत् मद्वचनं सर्व्वं पुनः पुनः स्मरतः प्रतिबन्धक्षयाच्च स्वयमेवात्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्य्यादेशे च तयोश्चित्तदुःखोत्पत्तिं परिजिहीर्षन् कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः। तौ हेन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धीव प्रवव्रजतुरित्यर्थः। ननु शम एव शमश्चेत्तयोर्जातो विपरीतग्रहो विगतोऽभविष्यत् प्रवव्रजतुर्गतवन्तौ एवं तयोर्गतयोरिन्द्रविरोचनयो राज्ञोर्भोगासक्तयोर्यथोक्तविस्मरणं स्यादित्याशङ्क्याप्रत्यक्षं प्रत्यक्षवचनेन तयोश्चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छन्ताव-

---

दुदशरावादवाक्यात्साध्वलङ्कारवाक्याच्च छायातद्वतोरन्यतरस्यैवात्मत्वमध्यासादिति भ्रमातिशयः सुतरामित्युक्तः॥ प्रजापतिवाक्यमुत्थापयति य इत्यादिना॥ वाक्यव्याख्यानमतिदिशति। पूर्व्ववदिति॥ एवशब्देन तयोरभिप्रेतमेवात्मानं छायाख्यं देहाख्यं च पराख्यं प्रजापतिरनुमोदितवानित्याशङ्क्याह। नन्विति॥ तौ ह शान्तहृदयावित्यादिवाक्यस्य तात्पर्य्यमाह। आत्मेत्यादीति॥ संस्कृतौ तावद्भवतामिति शेषः। संस्कृतयोरपि तयोरात्मविषये कथं विवेको भविष्यतीत्याशङ्क्याह। मद्वचनमिति॥ उपेक्षायां कारणान्तरमाह। पुनरिति॥

जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमञ्चामु-

---

क्ष्य य आत्माऽपहतपाप्मेत्यादिवचनवदेतदप्यनयोः श्रवणगोचरत्वमेष्यतीति मत्वोवाच प्रजापतिमनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षमकृत्वा विपरीतनिश्चयौ च भूत्वेन्द्रविरोचनावेतौ प्रव्रजतो गच्छेयाताम्। अतो यतरे देवा वाऽसुरा वा किं विशेषितेनैतदुपनिषद आभ्यां या गृहीताऽऽत्मविद्या सेयमुपनिषद्येषां देवानामसुराणां वा त एतदुपनिषद एवं विज्ञाना एतन्निश्चया भविष्यन्तीत्यर्थः। ते किं पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहिर्भूता विनष्टा भविष्यन्तीत्यर्थः। स्वगृहं गच्छतोः सुरासुरराजयोर्योऽसुरराजः स ह शान्तहृदय एव सन् विरोचनोऽसुराञ्जगाम। गत्वा च तेभ्योऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रो-

---

किमिति शान्तहृदयत्वं तुष्टहृदयत्वेन व्याख्यायते हृदयगतः शम एव किं न विवक्ष्यते तत्राह। नत्विति॥ यदि प्रजापतिस्तावुपेक्षितवान् किमिति तर्हि तौ हन्तेक्ष्येत्यादिवाक्यमित्याशङ्क्याह। राज्ञोरिति प्रजापतिरुवाचेति सम्बन्धः। तर्हि किमिति तावाहूय नोक्तवानित्याशङ्क्याह। प्रत्यक्षवचनेनेति॥ कर्तृत्वेन सम्बन्धार्थमुक्तमेव पुनरनुवदति। य आत्मेति। किमवादीदित्यपेक्षायामाह। अनुपलभ्येति॥ यथोक्तं प्रजापतिवाक्यं श्रुत्वापि गच्छतोरिन्द्रविरोचनयोर्विरोचनगतमवान्तरविशेषमाह॥ स्वगृहमिति॥ पितातयोक्तार्थेऽपि

न्वेति ॥ ४ ॥ तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति सꣳस्कुर्व्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ ८ ॥

---

वाचोक्तवान्। देहमात्रमेवात्मा पित्रोक्त इति। तस्मादात्मैव देह इह लोके महय्यः पूजनीयस्तथा परिचर्य्यः परिचरणीयस्तमात्मानमेवेह लोके देहं महयन् परिचरंश्चोभौ लोकाववाप्नोतीमञ्चामुञ्च। इहलोकपरलोकयोरेव सर्व्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः॥ तस्मात्सम्प्रदायोऽद्याप्यनुवर्त्तत इतीह लोके अददानं दानमकुर्व्वाणमविभागशीलम्। अश्रद्दधानं सत्कार्य्येषु श्रद्धारहितं यथाशक्ति। अयजमानमयजनस्वभावमाहुः। आसुरोऽसुरः खल्वयं यत एवं स्वभावो बतेति खिद्यमाना आहुः शिष्टाः। असुराणां हि यस्मादश्रद्दधानतादिलक्षणैषोपनिषत्। तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया

---

किमस्माभिस्तत्र कर्त्तव्यमित्याशङ्क्याह। तस्मादिति॥ तथा पूजनीयस्त्वद्वदिति यावत्॥ तथापि प्रार्थिता सर्व्वलोककामावाप्तिरसिद्धेत्याशङ्क्याह। इहलोकेति। विरोचनसम्प्रदायस्याविच्छेदं दर्शयति। तस्मादिति॥ देहात्मवादस्यासुरत्वादिति यावत्। तत्सम्प्रदायस्तेषां विरोचनप्रभृतीनामसुराणां सम्प्रदायो देहात्मत्वोपदेशः। किमित्यत्र-

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः

---

वसनेन वस्त्रादिप्रकारेणालङ्कारादिकरणेन ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्त्येतेन कुणपं संस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ॥ ८ ॥

अथ ह किलेन्द्रोऽप्राप्यैव देवान्। दैव्याऽकौव्यादिसम्पदा युक्तत्वाद्गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान्। उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तस्तदेकदेशो मघवतः प्रत्यभाद्बुद्धौ । येन छायात्मग्रहणे दोषं ददर्श। कथम्। यथैव खल्वयमस्मिञ्छरीरे साध्व-

---

त्वादिरहितमासुरमाहुरित्यपेक्षायामाह। असुराणां ह्येति ॥ प्रकृतोपनिषत्कार्थं कथयति ।तथेति॥ ८ ॥

एवं विरोचनगतं विशेषं दर्शयित्वा देवराजगामिनं विशेषमाह। अथेत्यादिना ॥ द्वयोस्तुल्यत्वेऽपि प्राजापत्यवाक्यश्रवणे देवराजस्यैव कथं पथि तदनुसन्धानवृत्तमित्याशङ्क्याह। दैव्येति ॥ स्मरणफलमाह। स्मरन्नेवेति ॥ प्रजापतिवचनं स्मरतोऽपि कथमिन्द्रस्य छायात्मग्रहणे दोषदर्शनमित्याशङ्क्याह। उदशरावेति ॥ यदर्थो देहादेरनात्मत्वज्ञापनार्थेति यावत्। कादाचित्कत्वव्यभिचारित्वादिर्न्यायः । तदेकदेशो व्यभिचारित्वेनानात्मत्वम् ॥ न्यायैकदेशदृष्टिफलमाचष्टे। येनेति ॥ दोषदर्शनमेवाकाङ्क्षाद्वारा स्फोरयति। कथमित्यादिना ॥ उक्ते वाक्ये

परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरु-

---

लङ्कृते छायात्मापि साध्वलङ्कृतो भवति सुवसने च सुवसनः परिष्कृते परिष्कृतः । यथा नखरोमादिदेहावयवापगमे छायात्मापि परिष्कृतो भवति । नखरोमादिरहितो भवति । एवमेवायं छायात्माप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धे चक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः किलैकनेत्रस्तस्यान्धत्वेन गतत्वाच्चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः । परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा । स्रामे परिवृक्णे देहे छायात्मापि तथा भवति । तथाऽस्य देहस्य नाशमन्वेष नश्यति । अतो नाहमत्रास्मिंश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीति । एवं दोषं देहे छाया-

---

विवक्षितमर्थं कथयति । यथेति ॥ परिष्कृतो भवतीत्येतद्व्याचष्टे । नखेति ॥ एवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदित्यर्थः । शरीरेऽस्मिन्नन्धे सति छायात्माप्यन्धो भवतीति सम्बन्धः । किमिति देहस्यान्धे छायात्मनस्तद्दिष्टमित्याशङ्क्याह । नखरोमादिभिरिति । तैः सह चक्षुरादीनां तुल्यत्वाद्देहावयवत्वस्य देहे नखाद्यभावे छायायामपि तदभावाभ्युपगमाद्देहे चक्षुराद्यभावेऽपि छायायां तदभावो युक्त इत्यर्थः ॥ स्रामशब्दस्यापुनरुक्तमर्थं कथयति । स्रामः किलेति ॥ पदार्थमुक्त्वा वाक्यार्थमाह । स्राम इति ॥ पारतन्त्र्यादनात्मत्वं छायाया दर्शयित्वा तत्रैव हेत्वन्तरमाह ।

वाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते

---

तदर्शने चाध्यवस्य समित्पाणिर्ब्रह्मचर्यं वस्तुं पुनरेयाय। तं ह प्रजापतिरुवाच। मघवन् यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्द्धं किमिच्छन् पुनरागम इति। विजानन्नपि पुनः पप्रच्छ इन्द्राभिप्रायाभिव्यक्तये। यद्वेत्थ तेन मोपसीदेति यद्वत्तया च स्वाभिप्रायं प्रकटमकरोत्। यथैव खल्वयमित्याद्येवमेवेति चान्वमोदत्प्रजापतिः। ननु तुल्येऽपि पुरुषश्रवणे देहच्छायामिन्द्रोऽग्रहीदात्मेति देहमेव तु विरोचनस्तत्किन्निमित्तं तव मन्यते। यथेन्द्रस्योदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैवाचार्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषप्रदर्शनश्चाभूत् न तथा विरोचनस्य किन्तर्हि

---

तथेति॥ विनाशित्वादियुक्तिदर्शनफलमुपसंहरति। अत इति॥ दोषं दृष्ट्वा यथोक्तरीत्या किं कृतवानित्यपेक्षायामाह। इत्थमिति॥ सर्वज्ञो हि प्रजापतिरिन्द्राभिप्रायं जानन्नेव किमर्थं प्रश्नं कृतवत्पृच्छतीत्याशङ्क्याह। विजानन्नपीति॥ आचार्यस्य जानतोऽपि शिष्यं प्रत्यभिप्रायं विशेषेण ज्ञातुं प्रश्नोपपत्तौ दृष्टान्तमाह। यद्वेत्थेति॥ तथा च प्रजापतिप्रश्नानुरोधेनेति यावत्। इन्द्रविषयः सन्दर्भः॥ शिष्ययोः समश्रवणेऽपि प्रतिपत्तिवैषम्ये निमित्तं पृच्छति। नन्विति॥ आचार्यमतोपन्यासद्वारा परिहरति। तत्रेति॥ तत्र प्रतिपत्तिविशेषे दृष्टान्तेन निमित्तविशेषं दर्शयति यथेति॥ आचार्योक्तबुद्ध्या तात्पर्येण

साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाऽहमत्र भोग्यं

---

देह एव त्वात्मदर्शनम्। नापि तत्र दोषदर्शनं बभूव। तद्वदेव विद्याग्रहणसामर्थ्ये प्रतिबन्धदोषादल्पत्वबहुत्वापेक्षमिन्द्रविरोचनयोश्छायात्मदेहयोर्ग्रहणम्। इन्द्रोऽल्पदोषत्वाद्दृश्यत इति श्रुत्यर्थमेव श्रद्दधानतया जग्राहेतरश्छायात्मनिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तोऽयमिति दोषभूयस्त्वात्। यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्महाहंमिति छायानिमित्तं वास एवोच्यते न छाया तद्वद्विरो-

---

प्रजापतिना छायात्मैवोक्त इति भ्रान्त्येत्यर्थः। विरोचनस्येन्द्रवच्छायात्मग्रहणमाचार्योक्तबुद्ध्या माभूदित्याह। न तथेति॥ कथं तर्हि तस्यात्मदर्शनमित्याशङ्क्याह। देह एवेति॥ आचार्येणात्मा देह एवोक्त इति बुद्ध्या तत्रैव विरोचनस्यात्मत्वज्ञानमासीदित्यर्थः। इन्द्रस्य छायात्मग्रहणे देवानप्राप्तस्यैव मार्गमध्ये दोषदर्शनवद्विरोचनस्यासुरानप्राप्तस्याध्वनि देहात्मदर्शने दोषप्रदर्शनस्य न प्रवृत्तमित्याह। नापीति॥ दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। तद्वदेवेति॥ विद्याग्रहणौपायिकस्य सामर्थ्यस्य प्रतिबन्धभूतो यो रागादिदोषस्तदल्पत्वापेक्षमिन्द्रस्य छायायामात्मग्रहणमित्युक्तं व्यक्तीकरोति। इन्द्र इति॥ यथोक्तदोषभूयस्त्वापेक्षं स्फुटतो विरोचनस्याभिप्रायं दृष्टान्तेन दर्शयति। यथेत्यादिना॥ उक्तमर्थं बृहदारण्यकश्रुत्यवष्टम्भेन स्पष्टयति। स्वचित्तेति॥ देवान्मनुष्यानसुरांश्च प्रजापतिना दकारोपदेशसाधारण्येन कृतं तेषां तदीयश्रवणे तुल्येऽपि

पश्यामीति ॥ २ ॥ एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥ ९ ॥

---

वचनाभिप्रायः। स्वचित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे ख्यापितम्। दाम्यत दत्त दयध्वमिति दकारमात्रश्रवणाच्छ्रुत्यन्तरे निमित्तान्यपि तदनुगुणान्येव सहकारीणि भवन्ति। एवमेवैष मघवन् सम्यक् त्वयावगतं न छायात्मेत्युवाच प्रजापतिर्यो मयोक्त आत्मा प्रकृत एतमेवमात्मानन्तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्यास्यामि। यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयप्राप्तमपि नागृहीतमतः केनचिद्दोषेण प्रति-

---

तदर्थविशेषावधारणं स्वचित्तगुणदोषवशादेव बृहदारण्यके ख्यापितं तन्नेहापीत्यर्थः। तत्र वा कथं तुल्येऽपि श्रवणेऽर्थविशेषबुद्धिस्तत्राह दाम्यतेति॥ अदान्ता हि वयं स्वभावतस्तेन दाम्यतेत्यस्मान्प्रति पितोक्तवानिति देवानां मतिराविरासीत्। स्वभावतो लुब्धा वयं तेन दत्तेत्यस्मान्प्रत्युक्तवान्पितेति मनुष्याणां बुद्धिरासीत्। क्रूरा हि वयं स्वभावतस्तेन दयध्वमित्यस्मान्प्रजापतिः सूचितवानित्यसुराणां प्रतिपत्तिर्बभूव। तदेवं दकारमात्रश्रवणादात्मचित्तानुरोधेन विचित्रा तेषां मनीषा प्रवृत्ता तथेन्द्रविरोचनयोरपि भविष्यतीत्यर्थः॥ अथेन्द्रविरोचनयोर्युक्तिदर्शनाविशेषादर्थप्रतिपत्तेरप्यविशेषः स्यादिति चेन्नेत्याह। निमित्तान्यपीति॥ युक्तिदर्शनान्यपि स्वचित्तगुणदोषात्मकत्वाद्विशेषवत्तयोस्तदपेक्षं प्रतिपत्तिवैषम्यमविरुद्धमित्यर्थः। इन्द्राभिप्रायं बुद्ध्वा प्रजापतिरनुमोदितवानित्युक्तमिदानीमनुमोदितवाक्यं व्याकरोति।

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो न वैषोऽस्य दोषेण दुष्यति ॥ १ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि

---

मद्वचोग्रहणासामर्थ्यं त्वमतस्तत् क्षपणीयं वसापराणि द्वात्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच ॥ ८ ॥

य आत्माऽपहतपाप्मादिलक्षणो य एषोऽक्षिणीत्यादिना व्याख्यात एष सः । कोऽसौ । यः स्वप्ने महीमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान् स्वप्नभोगाननुभवतीत्यर्थः । एष आत्मेति होवाचेत्यादि समानम् । सह्येवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवान् पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श । कथं तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा योऽनन्धः स भवति । यदि

---

एवमेवेति ॥ इन्द्राभिप्रायविषय एषशब्दः ॥ अनुव्याख्यास्यामीत्युक्तं स्मृत्वा श्रोतुकामस्तमिन्द्रं प्रत्याह । स्त्र्यादिभिरिति । पूर्ववच्छायात्मदर्शनवदित्यर्थः ॥ अस्मिन्नप्यात्मनीति स्वप्नदर्शीत्यर्थः ॥ ८ ॥

छायात्मनः शरीरानुविधायित्ववत् स्वप्नस्यापि देहानुविधायित्वम् ॥ तच्च कथं पूर्ववद्दोषदर्शनमित्याशङ्क्य परिहरति । कथमित्यादिना । स्राम्येण चक्षुरादिगतानवरतस्रवित्वमलनिषण्णत्वेनेति यावत् । देहदोषे-

रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नाऽस्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादय-

---

स्राममिदं शरीरमस्रामश्च स भवति नैवैष स्वप्नात्माऽस्य देहस्य दोषेण दुष्यति नाप्यस्य वधेन स हन्यते छायात्मवत्। न चाऽस्य स्राम्येण स्रामः स्वप्नात्मा भवति। यदध्यायादावागममात्रेणोपन्यस्तं नास्य जरयैतज्जीर्य्यतीत्यादि। तदिह न्यायेनोपपादयितुमुपन्यस्तम्। न तावदयं छायात्मवद्देहदोषयुक्तः किन्तु घ्नन्ति त्वेवैनमेवशब्द इवार्थे घ्नन्ति वैनं केचनेति द्रष्टव्यम्। न तु घ्नन्त्येवेत्युत्तरेषु सर्व्वेष्विवशब्ददर्शनात्। नाऽस्य वधेन हन्यत इति विशेषणात् घ्नन्तित्वेवेति चेन्नैवम्। प्रजापतिं प्रमाणीकुर्व्वतोऽनृतवा-

---

णात्मनो न दोषो भवतीति प्रागेवोक्तं तत्किमर्थमिह पुनरुच्यतेऽत आह। यदध्यायादाविति। न्यायो ऽन्वयव्यतिरेकाख्यः एतद्देहाभिमानेहि सत्येव देहधर्म्मैः संदुष्यत इव द्रष्टा स्वप्ने त्वेतद्देहाभिमानाभावान्न तेन संदुष्यत इत्याह। तदिहेति॥ स्वप्नद्रष्टा चेद्देहदोषेण न युज्यते कथं तर्हि तस्मिन्दोषदर्शनमित्याशङ्क्याह। न तावदिति॥ किमित्येवकारो यथाश्रुतो न व्याख्यायते तत्राह। नन्त्विति। इतिशब्दो

न्तीवाऽप्रियवेत्तेव भवत्यपि रोदितीव नाऽहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैत-

हित्वापाप्मत्वानुपपत्तेः। एतदमृतमित्येतत्प्रजापतिवचनं कथं मृषा कुर्य्यादिन्द्रस्तं प्रमाणीकुर्वन्। ननु छायापुरुषे प्रजापतिनोक्तेऽस्य शरीरस्य नाशमन्वेष नश्यतीति दोषमद्राक्षीत्तथेहापि स्यात्। नैवम्। कस्माद्य एषोऽक्षिणि पुरुषो दृश्यते इति न छायात्मा प्रजापतिनोक्त इति मन्यते मघवान्। कथमपहतपाप्मादिलक्षणे दृष्टे यदि छायात्मा प्रजापतिनोक्त इति मन्यते तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत जगाम च। तस्मान्न छायात्मा प्रजापतिनोक्त इति मन्यते। तथा च व्याख्यातम्। द्रष्टाक्षिणि दृश्यत इति। तथा विच्छादयन्तीव विद्रावयन्तीव तथा च पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति। अपि च स्वयमपि रोदितीव। नन्वप्रियं वेत्तेव कथं वेत्तेव-

द्रष्टव्यमित्यनेन सम्बध्यते। देहस्य वधेन नायं हन्यत इति विशेषणात्स्वतो वधः स्वप्नदृशो नियमतो विवक्षितः। कस्मादेवमिन्द्रो न यथाश्रुत एवेति शङ्कते। नास्येति॥ किमयं प्रजापतिमाप्तमनाप्तं वा मन्यते। अद्यनाप्तं बुध्यते न तर्हि तं प्रत्युपगतिरिन्द्रस्य विद्याग्रहणार्थं सम्भवतीति मत्वाऽऽह। नैवमिति॥ विकल्पान्तरमाह। प्रजापतिमिति॥ न स्वतो हननं स्वप्नदृशो विवक्षितमिन्द्रस्येति शेषः॥ उक्तमेव स्फोरयति। एतर्हीति॥ दृष्टान्तेन शङ्कते। नन्विति॥ दृष्टान्तं विघटयति। नैवमिति॥ तद्विघटनप्रकारं प्रश्नपूर्वकं प्रकटयति। कस्मादित्यादिना॥ तदेवाकाङ्क्षापूर्वकं प्रपञ्चयति। कथमित्यादिना॥ यथेन्द्रो दृश्यत इति

न्त्वेव ते भूयोऽनुव्याख्यास्यामि वसाऽपराणि द्वात्रिंशतं वर्षाणीति स हाऽपराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥ १० ॥

---

वेत्त्युच्यते । न । अमृताभयत्ववचनानुपपत्तेः । ध्यायतीवेति च श्रुत्यन्तरात् । ननु प्रत्यक्षविरोध इति चेत् । न । शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसम्भवात् । तिष्ठतु तावदप्रियवेत्तैव न वेति नाहमत्र भोग्यं पश्यामि । स्वप्नात्मज्ञानेऽपि दृष्टं फलं नोपलभ्यत इत्यभिप्रायः । एवमेवैष तवाभिप्रायेणेति वाक्यशेषः । आत्मनोऽमृताभयगुणवत्त्वस्याभिप्रेतत्वात् द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति । तस्मात्पूर्ववदस्याद्यापि प्रतिबन्धकारणमस्तीति मन्वानस्तत्क्ष-

---

श्रुत्यर्थं गृहीत्वा छायात्मानमेव गृहीतवानित्युक्तं कथमिदानीमन्यथोच्यते तत्राह । तथेति ॥ यथेदं वाक्यमध्युपलक्षितद्रष्टृपरं तथा प्रागेव व्याख्यातं न तु स्वप्नद्रष्टरि छायात्मनीव स्रष्टा विनाशदृष्टिरित्यर्थः । यथावदुपगम्य स्वप्नद्रष्टारं मन्तीव तथेति यावत् ॥ इवशब्दमाक्षिपति । नन्विति ॥ वेत्तृत्वं विकारश्चेदमृतत्वं न स्यान्मृदादिवद्विनाशित्वप्रसङ्गात्तस्मादिवशब्दो युक्त इत्युत्तरमाह । उच्यत इति ॥ अहं वेद्मीति विक्रियाश्रयत्वप्रत्यक्षविरोधादिवशब्दो न युक्त इति शङ्कते । नन्विति ॥ अध्यासादपि प्रत्यक्षोपपत्तेर्न विकारित्वं सिध्यतीति परिहरति । नेत्यादिना ॥ नाहमित्यादि वाक्यमवतारयति । तिष्ठत्विति ॥ न वेत्त्यप्रियवेत्तैव भवतीत्यर्थः ॥ इष्टं सर्वलोककामावाप्तिलक्षणं विधेये ब्रह्मभावे नाध्यात्मिकमप्यप्रियवेत्तृत्वादिकमस्ति । तत्पुनरहं हेयोऽप्यागतमतस्त्वदभिप्रायेणाप्रियवेत्तैवं स्वप्नद्रष्टा ॥ न तु मदभिप्रायेणेति विशिनष्टि । तवेति ॥ तत्र हेतुमाह । आत्मन इति ॥ वसापरा-

तद्धैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः

---

पुनरेयाय तꣳह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

पर्याय वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्य्यमित्यादिदेश प्रजापतिः। तथोषितवते क्षयितकल्मषायाह ॥ १० ॥ पूर्ववदेतन्त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यम्। अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एषः सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव मघवान्। तत्रापि दोषं ददर्श। कथं नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं सम्प्रति सम्यगिदानीमात्मानं जानाति नैवं जानाति। कथमयमहमस्मीति नो एवेमानि भूतानि चेति। यथा जाग्रति स्वप्ने वा। अतो विनाशमेवेति

---

णीत्यादिवाक्यतात्पर्य्यमाह। द्विरुक्तमपीति॥ तथा प्रजापतिवाक्यानुसारेणेति यावत् ॥ १० ॥

यथापूर्व्वमेतन्त्वेव ते इत्याद्युक्त्वा य एव स्वप्ने महीयमान इत्याद्युक्तं तथेहाप्येतन्त्वेवेत्युक्त्वा तद्यत्रैतदित्याह। विशिष्टाधिकारिणे प्रजापतिरिति योजना ॥ व्याख्यातस्यैव वाक्यस्यार्थं सङ्क्षिप्य दर्शयति। अक्षिणीति ॥ तत्रापि सुषुप्तदर्शनेऽपीत्यर्थः ॥ तदेव दोषदर्शनं प्रश्नद्वारा

पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥ एवमेवैष मघवन्निति होवाच एतं त्वेव ते भूयोऽनुव्या-

नाशमेवेति पूर्ववत्तद्द्रष्टव्यम्। अपीतोऽतिगतो भवति विनष्ट इव भवतीत्यभिप्रायः। ज्ञाने हि सति ज्ञातुः सद्भावो गम्यते नाऽसति ज्ञाने। न च सुषुप्तस्यस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः। न तु विनाशमेवात्मनो मन्यते ऽमृताभयवचनस्य प्रामाण्यमिच्छन् पूर्ववदेवमेवेत्युक्त्वा यो मयोक्तस्त्रिभिः पर्यायैस्तमेवैतं नो एवान्यत्रैतस्मादात्मनोऽन्यं कञ्चन किन्तर्हि एतमेव व्याख्यास्यामि। स्वल्पस्तु दोषस्तवावशिष्टस्तत्क्षपणाय वसाऽपराण्यन्यानि पञ्च वर्षाणीत्युक्तः स तथा चकार। तस्मै क्षपितकषायादिदोषाय स्थानत्रयदोषसम्बन्धरहितमात्मनः स्वरूपमपहतपाप्मत्वादिलक्षणं मघवते तस्मै होवाच। तान्येकशतं वर्षाणि

स्फोरयति। कथमित्यादिना॥ स्वात्मानं न जानातीत्युक्तमेवाकाङ्क्षाद्वारेणाभिनयति। कथमिति॥ तत्र वैधर्म्यं दृष्टान्तमाह। यथेति॥ स्वपरविवेकाभावे दोषमाह। अत इति॥ उक्तोक्तमेवानोद्य कथयति। पूर्ववदिति॥ इतो ज्ञानाभावकालेऽपि विनष्टत्वमित्यात्मनोऽभिमानमभिप्रायं

व्याख्यास्यामि नो एवान्यत्रैतस्मादसाऽपराणि पञ्च वर्षाणीति सहापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ सम्पेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्य्यमुवास तस्मै होवाच ॥ ३ ॥ ११ ॥

मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना

सम्पेदुः सम्पन्नानि बभूवुः। यदाहुर्लोके शिष्टा एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवासेति। तदेद्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते। एवन्तु किलैतदिन्द्रत्वादपि गुरुतरमिन्द्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानमतो नातःपरं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥ ११ ॥

मघवन्मर्त्यं वै मरणधर्मीदं शरीरम्। यन्मन्यसेऽक्ष्याधारादिलक्षणः सम्प्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति। शृणु तत्र कारणम्। यदिदं शरीरं

स्वप्यति। ज्ञाने हीति॥ एवकारो यथाश्रुत एव किं न स्यादित्याशङ्क्याह। न त्विति॥ पूर्ववद्ब्रह्मचर्य्यादेरभावे हेतुमाह। स्वल्पस्त्विति॥ आख्यायिकातोऽपसृत्य श्रुतिरक्षर्यं किमर्थमित्यनुपदिशतीत्याशङ्क्याह। एवञ्चिति॥ ११॥

कार्य्यकारणपरिवेष्टितो विश्वतैजसावुक्तौ। कारणमात्रवद्ध प्राज्ञो व्याख्यातः॥ सम्प्रत्यशरीरत्तरं यदुपदेष्टुं सशरीरतां निन्दति। मघवन्निति॥ शरीरवदात्मनोऽपि विनाशित्वमवस्थाविशेषे दर्शि-

**तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै**

वै यन्म्रियते तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सन्ततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्तेन तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैराग्यार्थं विशेष इत्युच्यते। आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्त्तेत इति। शरीर-मित्यत्र सदेहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसा-दस्य तिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रि-यमनोधर्म्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्त्तिमत्त्वे मा भूतामित्यात्मनो भोगाधिष्ठानम्। आत्मनो वा सत ईक्षितुस्तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानम्। जीव-रूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वाधिष्ठानम्। यस्मै-दमीदृशं नित्यमेव मृत्युग्रस्तं धर्म्माधर्म्मजनितत्वात्प्रिया-प्रियवदधिष्ठानं तदधिष्ठितस्तद्वान् सशरीरो भवति।

---

तमित्याशङ्क्याह। तच्चात्तमिति॥ सशरीरो विशेषविज्ञानवान् भवत्यशरीरस्य तु विशेषविज्ञानाभावाद्विनाशशङ्को न पुनरसौ वस्तुतो विनश्यति येन रूपेणाभिनिष्पद्यत इति सम्प्रसादस्याविनाशित्व-वचनादित्यभिप्रेत्य कारणमेव चाहयन्नक्षराणि व्याचष्टे। यद्विदमित्यादिना॥ ननु मर्त्यमित्येतावतैव मृत्युव्याप्तत्वे शरीरस्य सिद्धे किमित्यात्तं मृत्युनेति पुनरुच्यते तत्राह। कदाचिदेवेति॥ वैराग्यार्थं विशेषवचनमित्युक्तं यथा वैराग्यं किमर्थमित्याशङ्क्याह। कथमिति॥ निवर्त्तने विशेषवचनं फलवदिति शेषः॥ तदस्येत्यत्र तच्छब्दार्थमाह। शरीरमित्यत्रेति।

सशरीरः प्रियाप्रियाभ्यां न वै सशरी-

अशरीरस्वभावस्यात्मनो देहोऽहं शरीरं शरीरमेव चाह-मित्यविवेकादात्मभावः सशरीरत्वमत एव सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्याम्। प्रसिद्धमेतत्तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोर्वाह्यविषयसंयोगवियोग-योर्निमित्तयोर्वाह्यविषयसंयोगवियोगौ ममेति मन्यमा-नस्यापहतिर्व्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति। तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्त्तिता विवे-कज्ञानमशरीरं सन्तं प्रियाऽप्रिये न स्पृशतः। स्पृशिः प्रत्येकं सम्बध्यत इति। प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति। न म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेतेति यद्वत्। धर्म्माधर्म्मकार्य्ये हिताहिते यतोऽशरीरता तु स्वरूपमिति। तत्र धर्म्माधर्म्मयोरसम्भवात्तत्कार्य्याभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः। ननु यदि प्रियम-

मघवन्नित्यादिवाक्यं सप्तम्यर्थः। लिस्मानतया जाग्रत्स्वप्नसुषुप्तिस्था-नत्रयसम्बन्धित्वेनेति यावत्। अन्ततत्वं षडूर्म्मिवर्जितत्वमशरीरत्वं स्वाभाविकमावयत्वादिराहित्यं आत्मनोऽधिष्ठानमित्यत्र भोगेत्यपे-क्षितपूर्व्वं कृतं भोगायतनं शरीरमिति विशेषणार्थस्तस्मात् तस्यैवार्था-न्तरमाह। आत्मनो वेति॥ अधिष्ठानं अर्थात्स्वकाशोपलब्धेरधिकरणमिति यावत्॥ अधिष्ठानशब्दस्यार्थान्तरमाह। जीवरूपेणेति॥ उत्तरवाक्यस्य अशरीरपदं व्याचष्टे। अस्येति॥ ईदृशं कर्त्त्वादिविशेषणवदित्यर्थः॥ तदयोक्तं शरीरमधिष्ठितमनेनेति अनुमत्वा तदधिष्ठितवाचकः इत्येव इत्यर्थः॥ तत्रैव सम्मिश्रितत्वमर्थमाह। तत्रानिति॥ उत्तरेऽर्थे विशेषणं

